वर्णाङ्कगुणार्थत्रियुतं स्थिरामुखि इति सम्बोध्य सर्वदुष्टानामिदं चाभाष्य, वाचमिति मुखमिति पदमिति स्तम्भयेति चोच्चार्य जिह्वां वैशारदीं कीलयेति बुद्धिं विनाशयेति प्रोच्चार्य भूमायां वेदाद्यं, ततो यज्ञभूगुहायां योजयेत्। स महास्तम्भेश्वरः, सर्वेश्वरः, स सेनास्तम्भं करोति। किं बहुना विवस्वद्धृतिस्तम्भकर्ता, सर्ववातस्तम्भकर्तेति किं दिवा कर्षयति स सर्वविद्येश्वरः सर्वमन्त्रेश्वरो भूत्वा पूजायाम् आवर्तनं त्रैलोक्यस्तम्भिन्याः कुर्यात्।

'ऐं ह्ल्रीं स्थिरामुखि ! सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्ल्रीं ॐ स्वाहा'।

हे स्थिरमुखी ! सभी दुष्टों के वचन, मुख, पद एवं पद का स्तम्भन करो; वैशारदी रसना को कीलित करो और बुद्धि का विनाश करो। इस मन्त्र का जप करना चाहिए।

ऐसा कहने वाला महान् स्तम्भेश्वर एवं सर्वेश्वर हो जाता है। वह सेना का स्तम्भ करता है। अधिक क्या ? वह सूर्य की गति का स्तम्भन करने वाला, समस्त वायु को स्तम्भित करने वाला और दिन को आकृष्ट करने वाला होता है। वह समस्त विद्याओं का स्वामी, समस्त मन्त्रों का मन्त्रेश्वर एवं त्रैलोक्य को स्तम्भित करने वाला है। अतः त्रैलोक्यस्तम्भिनी की पूजा का आवर्तन करता है।

अङ्गमाद्यं द्वारतो गणेशं, वटुकं, योगिनीं, क्षेत्राधीशं च पूर्वादिकमभ्यर्च्य, गुरुपंक्तिमीशा सुरान्तमन्तः प्राच्यादौ क्रमानुगता बगला, स्तम्भिनी, जृम्भिणी, मोहिनी, अचला, दुर्धरा, अकल्मषा, आधारा, कल्पना, कालकर्षिणी, भ्रमरिका, मन्दगमना, भोगिका (भोगा), योगिका।

ह्यष्टदलानुगाः पूज्याः ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, नारसिंही, चामुण्डा, महालक्ष्मीश्च षड्योनिगर्भान्ता डाकिनी, राकिनी, लाकिनी, काकिनी, शाकिनी, हाकिनी वेदाद्यस्थिरमायायाः समभ्यर्च्य शक्राग्नियमनिर्ऋतिर्वरुणवायुधनदेशानप्रजापति-नागेशाः, परिवाराभिमताः स्थिरादिवेदाद्याः सवाहनाः सदस्त्रका बाह्यतोऽभ्यर्च्य तां योनिं रतिं प्रीतिमनोभुवा एताः सर्वाः समाः पीतांशुका ध्येयाः।

इस पूजा का आद्य अङ्ग इस प्रकार है कि द्वार पर पूर्व आदि के क्रम से गणेश, बटुक, योगिनी और क्षेत्रपाल की पूजा करे। बिन्दु के ईशान कोण से अग्निकोण तक गुरुपंक्ति की एवं अन्दर पूर्वादिक्रम से—(१) मङ्गला, (२) स्तम्भिनी, (३) जृम्भिणी, (४) मोहिनी, (५) वश्या, (६) अचला, (७) चला, (८) दुर्धरा, (९) अकल्मषा, (१०) धीरा, (११) कलना, (१२) कालकर्षिणी, (१३) भ्रामिका, (१४) मन्दगमना, (१५) भोगदा (भाविका) और (१६) योगिका की षोडश दलों में पूजा करनी चाहिए।

अष्टदलों में—(१) ब्राह्मी, (२) माहेश्वरी, (३) कौमारी, (४) वैष्णवी, (५) वाराही, (६) नारसिंही, (७) चामुण्डा तथा (८) महालक्ष्मी की एवं ६ त्रिकोणों के मध्य—(१) डाकिनी, (२) राकिनी, (३) लाकिनी, (४) काकिनी, (५) शाकिनी तथा

(६) हाकिनी की 'ॐ ह्रीं' मन्त्र से पूजा करके—(१) इन्द्र, (२) अग्नि, (३) यम, (४) निर्ऋति, (५) वरुण, (६) वायु, (७) कुबेर, (८) ईशान, (९) प्रजापति और (१०) नागेश (अनन्त)—इन १० दिक्पालों की सपरिवार, सवाहन एवं सास्त्र भूगृह के बाह्य भाग में 'ॐ ह्रीं' मन्त्र से पूजा करनी चाहिए। त्रिकोण के तीनों कोणों में रति, प्रीति एवं मनोभवा की पूजा करनी चाहिए। इन सभी को पीतवस्त्रधारी के रूप में कल्पित करना चाहिए।

तदन्तमूलायां दलादिषोडशानुगता: पूज्या नीराजनै: सहैश्वर्ययुक्तो भवति, य एनां ध्यायति स वाग्मी भवति, सोऽमृतमश्नुते सर्वसिद्धिकर्ता भवति, सृष्टिस्थितिसंहारकर्ता भवति, स सर्वेश्वरो भवति, स तु ऋद्धीश्वरो भवति, स शाक्त:, स वैष्णव:, स गणप:, स शैव:, स जीवन्मुक्तो भवति, स संन्यासी भवति न तु मुण्डितमुण्ड:। षट्त्रिंशदस्त्रेश्वरो भवेत्; सौभाग्यार्चनेनेति प्रोतं वेद ॐ शिवम्। 'सह नाववतु' इति मन्त्रेण शान्ति:।

नीराजना के साथ ऐसी पूजा करने वाला साधक ऐश्वर्यवान् हो जाता है।

जो इनका ध्यान करता है वह विद्वान् हो जाता है। वह दीर्घजीवी हो जाता है। वह सर्वसिद्धिकर्त्ता हो जाता है। वह सृष्टि, स्थिति एवं संहार का निष्पादन करने में समर्थ हो जाता है। वह सर्वेश्वर हो जाता है। वह ऋद्धीश्वर हो जाता है। वह शाक्त, वैष्णव, गणप, शैव एवं जीवन्मुक्त हो जाता है।

वह केवल मुण्डितमुण्ड न रहकर यथार्थ संन्यासी हो जाता है। सौभाग्यार्चन से छत्तीस अस्त्रों का अधीश्वर हो जाता है। 'ॐ शिवं सह नाववतु'—इस मन्त्र से शान्ति हो।

## बगलामुखीकवच

### रुद्रयामलमहातन्त्र का श्रीमहाविद्यापीताम्बराबगलामुखी कवच

मध्ये सुधाब्धिमणिमण्डपरत्नवेद्यां, सिंहासनोपरि गतां परिपीतवर्णाम्।
पीताम्बराभरणमाल्यविभूषिताङ्गीं, देवीं भजामि धृतमुद्गरवैरिजिह्वाम् ॥१॥
जिह्वाग्रमादाय करेण देवीं वामेन शत्रून् परिपीडयन्तीम्।
गदाभिघातेन च दक्षिणेन पीताम्बराढ्यां द्विभुजां नमामि ॥२॥
हिमवत्तनया गौरी कैलासेऽथ शिलोच्यते।
अपृच्छद्गि:.....देवी साधकानुग्रहेच्छया ॥

#### श्रीपार्वत्युवाच

देवदेव महादेव भक्तानुग्रहकारक।
शृणु विज्ञाप्यते यत्तु श्रुत्वा सर्वं निवेदय ॥२॥
विशुद्धा: कौलिका लोके ये मत्कर्मपरायणा:।
तेषां निन्दाकरा लोके बहव: किल दुर्जना: ॥३॥

मनोबाधां विदधते मुहुः कटुभिरुक्तिभिः ।
तेषामाशु विनाशाय त्वया देव प्रकाशितः ॥४॥
यो मन्त्रो बगलामुख्याः सर्वकामसमृद्धिदः ।
कवचं तस्य मन्त्रस्य प्रकाशय दयानिधे ॥५॥
यस्य स्मरणमात्रेण पशूनां निग्रहो भवेत् ।
आत्मानं सततं रक्षेद् व्याघ्राग्निरिपुराजतः ॥६॥
श्रुत्वाथ पार्वतीवाक्यं ज्ञात्वा तस्या मनोगतम् ।
विहस्य तां परिष्वज्य साधु साध्वित्यपूजयत् ॥७॥
तदाह कवचं देव्यै कृपया करुणानिधिः ।

**श्रीशङ्कर उवाच**

शृणु त्वं बगलामुख्याः कवचं सर्वकामदम् ॥८॥
यस्य स्मरणमात्रेण बगलामुखी प्रसीदति ।
सर्वसिद्धिप्रदा प्राच्यां पातु मां बगलामुखी ॥९॥
पीताम्बरा तु चाग्नेय्यां याम्यां महिषमर्दिनी ।
नैर्ऋत्यां चण्डिका पातु भक्तानुग्रहकारिणी ॥१०॥
पातु नित्यं महादेवी प्रतीच्यां शूकरानना ।
वायव्ये पातु मां काली कौबेर्यां त्रिपुराऽवतु ॥११॥
ईशान्यां भैरवी पातु पातु नित्यं सुरप्रिया ।
ऊर्ध्वं वागीश्वरी पातु मध्ये मां ललिताऽवतु ॥१२॥
अधस्ताद् अपि मां पातु वाराही चक्रधारिणी ।
मस्तकं पातु मे नित्यं श्रीदेवी बगलामुखी ॥१३॥
भालं पीताम्बरा पातु नेत्रे त्रिपुरभैरवी ।
श्रवणौ विजया पातु नासिकायुगलं जया ॥१४॥
शारदा वचनं पातु जिह्वां पातु सुरेश्वरी ।
कण्ठं रक्षतु रुद्राणी स्कन्धौ मे विन्ध्यवासिनी ॥१५॥
सुन्दरी पातु बाहू मे जया पातु करौ सदा ।
भवानी हृदयं पातु मध्यं मे भुवनेश्वरी ॥१६॥
नाभिं पातु महामाया कटिं कमललोचना ।
ऊरू मे पातु मातङ्गी जानुनी चापराजिता ॥१७॥
जङ्घे कपालिनी पातु चरणौ चञ्चलेक्षणा ।
सर्वतः पातु मां तारा योगिनी पातु चाग्रतः ॥१८॥
पृष्ठं मे पातु कौमारी दक्षपार्श्वे शिवाऽवतु ।
रुद्राणी वामपार्श्वे तु पातु मां सर्वदेष्टदा ॥१९॥
स्तुता सर्वेषु देवेषु रक्तबीजविनाशिनी ।
इत्येतत् कवचं दिव्यं धर्मकामार्थसाधनम् ॥२०॥

गोपनीयं प्रयत्नेन कस्यचिन्न प्रकाशयेत् ।
यः सकृच्छृणुयाद् एतत् कवचं मन्मुखोदितम् ॥२१॥
स सर्वान् लभते कामान् मूर्खो विद्यामवाप्नुयात् ।
तस्याशु शत्रवो यान्ति यमस्य भवने शिवे ॥



## (रुद्रयामलोक्त अन्य) श्रीबगलामुखीकवच

### श्रीभैरवी उवाच

श्रुत्वा च बगलापूजां स्तोत्रं चापि महेश्वर ।
इदानीं श्रोतुमिच्छामि कवचं वद मे प्रभो ॥१॥
वैरिनाशकरं दिव्यं सर्वाऽशुभविनाशनम् ।
शुभदं स्मरणात् पुण्यं त्राहि मां दुःखनाशन ॥२॥

### श्रीभैरव उवाच

कवचं शृणु वक्ष्यामि भैरवि प्राणवल्लभे ।
पठित्वा धारयित्वा तु त्रैलोक्ये विजयी भवेत् ॥३॥

ॐ अस्य श्रीबगलामुखीकवचस्य नारद ऋषिः, अनुष्टुप् छन्दः, श्रीबगलामुखी देवता, लं बीजम्, ईं शक्तिः, ऐं कीलकम्, पुरुषार्थचतुष्टये जपे विनियोगः ।

शिरो मे बगला पातु हृदमेकाक्षरी परा ।
ॐ ह्लीं ॐ मे ललाटे च बगला वैरिनाशिनी ॥४॥
गदाहस्ता सदा पातु मुखं मे मोक्षदायिनी ।
वैरिजिह्वाधरा पातु कण्ठं मे बगलामुखी ॥५॥
उदरं नाभिदेशं च पातु नित्यं परात् परा ।
परात् परतरा पातु मम गुह्यं सुरेश्वरी ॥६॥
हस्तौ चैव तथा पातु पार्वती परिपातु मे ।
विवादे विषमे घोरे संग्रामे रिपुसङ्कटे ॥७॥
पीताम्बरधरा पातु सर्वाङ्गं शिवनर्तकी ।
श्रीविद्या समयं पातु मातङ्गी पूरिता शिवा ॥८॥
पातु पुत्रं सुतां चैव कलत्रं कालिका मम ।
पातु नित्यं भ्रातरं मे पितरं शूलिनी सदा ॥९॥
रन्ध्रे हि बगलादेव्याः कवचं मन्मुखोदितम् ।
न वै देयममुख्याय सर्वसिद्धिप्रदायकम् ॥१०॥
पठनाद् धारणादस्य पूजनाद् वाञ्छितं लभेत् ।
इदं कवचमज्ञात्वा यो जपेद् बगलामुखीम् ॥११॥

पिबन्ति शोणितं तस्य योगिन्यः प्राप्य सादराः ।
वश्ये चाकर्षणे चैव मारणे मोहने तथा ॥१२॥
महाभये विपत्तौ च पठेद् वा पठ्यते तु यः ।
तस्य सर्वार्थसिद्धिः स्याद् भक्तियुक्तस्य पार्वति ॥१३॥

## ब्रह्मास्त्रबगलामुखीकवच

### श्रीदक्षिणामूर्तिसंहितान्तर्गत-ब्रह्मास्त्रबगलामुखीकवच

**श्रीब्रह्मोवाच**

विश्वेश दक्षिणामूर्ते निगमागमवित् प्रभो ।
मह्यं पुरा त्वया दत्ता विद्या ब्रह्मास्त्रसंज्ञिता ॥१॥
तस्य मे कवचं ब्रूहि येनाहं सिद्धिमाप्नुयाम् ।
भवामि वज्रकवचं ब्रह्मास्त्रन्यासमात्रतः ॥२॥

**श्रीदक्षिणामूर्तिरुवाच**

शृणु ब्रह्मन् परं गुह्यं ब्रह्मास्त्रकवचं शुभम् ।
यस्योच्चारणमात्रेण भवेद् वै सूर्यसन्निभः ॥३॥
सुदर्शनं मया दत्तं कृपया विष्णवे तथा ।
तद्वत् ब्रह्मास्त्रविद्यायाः कवचं कथयाम्यहम् ॥४॥
अष्टाविंशत्यस्त्रहेतुमाद्यं ब्रह्मास्त्रमुत्तमम् ।
सर्वतेजोमयं सर्वं सामर्थ्यं विग्रहं परम् ॥५॥
सर्वशत्रुक्षयकरं सर्वदारिद्र्यनाशनम् ।
सर्वापच्छैलराशीनामस्त्रकं कुलिशोपमम् ॥६॥
न तस्य शत्रवश्चापि भयं चौर्यभयं जरा ।
नरा नार्यश्च राजेन्द्र खगा व्याघ्रादयोऽपि च ॥७॥
तं दृष्ट्वा वशमायान्ति किमन्यत् साधवो जनाः ।
यस्य देहे न्यसेद् धीमान् कवचं बगलामयम् ॥८॥
स एव पुरुषो लोके केवलः शङ्करोपमः ।
न देयं परशिष्याय शठाय पिशुनाय च ॥९॥
दातव्यं भक्तियुक्ताय गुरुदासाय धीमते ।
कवचस्य ऋषिः श्रीमान् दक्षिणामूर्तिरेव च ॥१०॥
अस्यानुष्टुप् छन्दः स्यात् श्रीबगला चास्य देवता ।
बीजं श्रीवह्निजाया च शक्तिः श्रीबगलामुखी ॥११॥
कीलकं विनियोगश्च स्वकार्ये सर्वसाधके ।

### अथ ध्यानम्

शुद्धस्वर्णनिभां रामां पीतेन्दुखण्डशेखराम् ।
पीतगन्धानुलिप्ताङ्गीं पीतरत्नविभूषणाम् ॥
पीनोन्नतकुचां स्निग्धां पीतलाङ्गीं सुपेशलाम् ।
त्रिलोचनां चतुर्हस्तां गम्भीरां मदविह्वलाम् ॥
वज्रारिरसनापाशमुद्गरं दधतीं करैः ।
महाव्याघ्रासनां देवीं सर्वदेवनमस्कृताम् ॥
प्रसन्नां सुस्मितां क्लिन्नां सुपीतां प्रमदोत्तमाम् ।
सुभक्तदु:खहरणे दयार्द्रां दीनवत्सलाम् ।
एवं ध्यात्वा परेशानि बगलाकवचं स्मरेत् ॥

### अथ रक्षाकवचम्

बगला मे शिरः पातु ललाटं ब्रह्मसंस्तुता ।
बगला मे भ्रुवौ नित्यं कर्णयोः क्लेशहारिणी ।
त्रिनेत्रा चक्षुषी पातु स्तम्भिनी गण्डयोस्तथा ।
मोहिनी नासिकां पातु श्रीदेवी बगलामुखी ।
ओष्ठयोर्दुर्धरा पातु सर्वदन्तेषु चञ्चला ।
सिद्धान्तपूर्णा जिह्वायां जिह्वाग्रे शारदाम्बिके ॥
अकल्मषा मुखे पातु चिबुके बगलामुखी ।
धीरा मे कण्ठदेशे तु कण्ठाग्रे कालकर्षिणी ॥

### ब्रह्मास्त्रबगलाकवचम्

शुद्धस्वर्णनिभा पातु कण्ठमध्ये तथाऽम्बिका ।
कण्ठमूले महाभोगा स्कन्धौ शत्रुविनाशिनी ॥
भुजौ मे पातु सततं बगला सुस्मिता परा ।
बगला मे सदा पातु कूर्परे कमलोद्भवा ॥
बगलाम्बा प्रकोष्ठौ तु मणिबन्धे महाबला ।
बगलाश्रीर्हस्तयोश्चैवं कुरुकुल्ला कराङ्गुलिम् ॥
नखेषु वज्रहस्ता च हृदये ब्रह्मवादिनी ।
स्तनौ मे मन्दगमना कुक्षयोर्योगिनी तथा ॥
उदरं बगला माता नाभिं ब्रह्मास्त्रदेवता ।
पुष्टिं मुद्गरहस्ता च पातु नो देववन्दिता ॥
पार्श्वयोर्हनुमद्वन्द्या पशुपाशविमोचिनी ।
करौ रामप्रिया पातु उरुयुग्मं महेश्वरी ॥
भगमाला तु गुह्यं मे लिङ्गं कामेश्वरी तथा ।

लिङ्गमूले महाक्लिन्ना वृषणौ पातु दूतिका।
बगला जानुनी पातु जानुयुग्मं च नित्यश:॥
जङ्घे पातु जगद्धात्री गुल्फौ रावणपूजिता॥
चरणौ दुर्जया पातु पीताम्बा चरणाङ्गुली:।
पादपृष्ठं पद्महस्ता पादाधश्चक्रधारिणी॥
सर्वाङ्गं बगला देवी पातु श्रीबगलामुखी।
ब्राह्मी मे पूर्वत: पातु माहेशी वह्निभागत:॥
कौमारी दक्षिणे पातु वैष्णवी स्वर्गमार्गत:।
ऊर्ध्वं पाशधरा पातु शत्रुजिह्वाधरा ह्यध:॥
रणे राजकुले वादे महायोगे महाभये।
बगला भैरवी पातु नित्यं क्लीङ्काररूपिणी॥
इत्येवं वज्रकवचं महाब्रह्मास्त्रसंज्ञकम्।
त्रिसन्ध्यं य: पठेद् धीमान् सर्वैश्वर्यमवाप्नुयात्॥
न तस्य शत्रव: केऽपि सखाय: सर्व एव च।
बलेनाकृष्य शत्रुं स्यात् सोऽपि मित्रत्वमाप्नुयात्॥
शत्रुत्वे मरुता तुल्यो धनेन धनदोपम:।
रूपेण कामतुल्य: स्याद् आयुषा शूलधृक्सम:॥
सनकादिसमो धैर्ये श्रिया विष्णुसमो भवेत्।
तत्तुल्यो विद्यया ब्रह्मन् यो जपेत् कवचं नर:॥
नारी वापि प्रयत्नेन वाञ्छितार्थमवाप्नुयात्।
द्वितीया सूर्यवारेण यदा भवति पद्मभू:॥
तस्यां जातं शतावृत्या शीघ्रं प्रत्यक्षमाप्नुयात्।
याता तुरीयं सन्ध्यायां भूशय्यायां प्रयत्नत:॥
सर्वान् शत्रून् क्षयं कृत्वा विजयं प्राप्नुयान्नर:।
दारिद्र्यान् मुच्यते चाऽशु स्थिरा लक्ष्मीर्भवेद् गृहे॥
सर्वान् कामानवाप्नोति सविषो निर्विषो भवेत्।
ऋणनिर्मोचनं स्याद् वै सहस्रावर्तनाद् विधे॥
भूतप्रेतपिशाचादिपीडा तस्य न जायते।
द्युमणिर्भ्राजते यद्वत् तद्वत् स्याच्छ्री: प्रभावत:॥
स्थिराभया भवेत् तस्य य: स्मरेद् बगलामुखीम्।
जयदं बोधनं काममभुकं देहि मे शिवे॥
जपस्यान्ते स्मरेद् यो वै सोऽभीष्टफलमाप्नुयात्।
इदं कवचमज्ञात्वा यो जपेद् बगलामुखीम्॥

न स सिद्धिमवाप्नोति साक्षाद् वै लोकपूजितः ।
तस्मात् सर्वप्रयत्नेन कवचं ब्रह्मतेजसम् ॥
नित्यं पदाम्बुजध्यानान् महेशानसमो भवेत् ॥



## विश्वसारोद्धारतन्त्रोक्त बगलामुखीकवच

कैलासाचलमध्यगं पुरवहं शान्तं त्रिनेत्रं शिवं
वामस्था गिरिजा प्रणव्य कवचं भूतिप्रदं पृच्छति ।
देवी श्रीबगलामुखी रिपुकुलारण्याग्निरूपा च या
तस्याश्चापविमुक्तमन्त्रसहितं प्रीत्याधुना ब्रूहि माम् ॥१॥

**श्रीशङ्कर उवाच**

देवि श्रीभववल्लभे शृणु महामन्त्रं विभूतिप्रदं
देव्या वर्मयुतं समस्तसुखदं साम्राज्यदं मुक्तिदम् ।
तारं रुद्रवधू विरञ्चिमहिला विष्णुप्रिया कामयुक्
कान्ते श्रीबगलानने मम रिपून् नाशाय युग्मं त्वति ॥२॥
ऐश्वर्याणि पदं च देहि युगलं शीघ्रं मनोवाञ्छितं
कार्यं साधय युग्मयुच्छिववधूवह्निप्रियान्तो मनुः ।
कंसारेस्तनयं च बीजमपरा शक्तिश्च वाणी तथा
कीलं श्रीमति भैरवर्षिसहितं छन्दो विराट्संयुतम् ॥३॥
स्वेष्टार्थस्य परस्य वेति नितरां कार्यस्य सम्प्राप्तये
नानाऽसाध्यमहागदस्य नियतं नाशाय वीर्याप्तये ।
ध्यात्वा श्रीबगलाननां मनुवरं जप्त्वा सहस्राख्यकं
दीर्घैः षट्कयुतैश्च रुद्रमहिलाबीजैर्विन्यस्याङ्गके ॥४॥

**ध्यानम्**

सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लासिनीं
हेमाभाङ्गरुचिं शशाङ्कमुकुटां सच्चम्पकस्रग्युताम् ।
हस्तैर्मुद्गरपाशवज्ररसनाः सम्बिभ्रतीं भूषणै-
र्व्याप्ताङ्गीं बगलामुखीं त्रिजगतां संस्तम्भिनीं चिन्तयेत् ॥

ॐ अस्य श्रीबगलामुखीब्रह्मास्त्रमन्त्रकवचस्य भैरव ऋषिः, विराट् छन्दः, श्रीबगलामुखी देवता, क्लीं बीजम्, ऐं शक्तिः, श्रीं कीलकं, मम परस्य च मनोभिलाषितेष्टकार्यसिद्धये विनियोगः । शिरसि भैरवऋषये नमः, मुखे विराट्छन्दसे नमः, हृदि बगलामुखीदेवतायै नमः, गुह्ये क्लीं बीजाय नमः, पादयोः ऐं शक्तये नमः, सर्वाङ्गे श्रीं कीलकाय नमः । ॐ ह्रां अङ्गुष्ठाभ्यां नमः, ॐ ह्रीं तर्जनीभ्यां नमः, ॐ ह्रूं

मध्यमाभ्यां नमः, ॐ हैं अनामिकाभ्यां नमः, ॐ ह्रौं कनिष्ठिकाभ्यां नमः, ॐ ह्रः करतलकरपृष्ठाभ्यां नमः। ॐ ह्रां हृदयाय नमः, ॐ ह्रीं शिरसे स्वाहा, ॐ ह्रूं शिखायै वषट्, ॐ हैं कवचाय हुम्, ॐ ह्रौं नेत्रत्रयाय वौषट्, ॐ ह्रः अस्त्राय फट्।

**मन्त्रोद्धारः**

ॐ ह्रीं ऐं श्रीं क्लीं श्रीबगलानने मम रिपून् नाशय नाशय, ममैश्वर्याणि देहि देहि, शीघ्रं मनोवाञ्छितं कार्यं साधय साधय ह्रीं स्वाहा।

शिरो मे पातु ॐ ह्रीं ऐं श्रीं क्लीं पातु ललाटकम्।
सम्बोधनपदं पातु नेत्रे श्रीबगलानने ॥१॥
श्रुतौ मम रिपुं पातु नासिकां नाशयद्वयम्।
पातु गण्डौ सदा मामैश्वर्याण्यन्तं तु मस्तकम् ॥२॥
देहि द्वन्द्वं सदा जिह्वां पातु शीघ्रं वचो मम।
कण्ठदेशं मनः पातु वाञ्छितं बाहुमूलकम् ॥३॥
कार्यं साधयद्वन्द्वं तु करौ पातु सदा मम।
मायायुक्ता यथा स्वाहा हृदयं पातु सर्वदा ॥४॥
अष्टाधिकचत्वारिंशदण्डाढ्या बगलामुखी।
रक्षां करोतु सर्वत्र गृहेऽरण्ये सदा मम ॥५॥
ब्रह्मास्त्राख्यो मनुः पातु सर्वाङ्गे सर्वसन्धिषु।
मन्त्रराजः सदा रक्षां करोतु मम सर्वदा ॥६॥
ॐ ह्रीं पातु नाभिदेशं कटिं मे बगलाऽवतु।
मुखिवर्णद्वयं पातु लिङ्गं मे मुष्कयुग्मकम् ॥७॥
जानुनी सर्वदुष्टानां पातु मे वर्णपञ्चकम्।
वाचं मुखं तथा पादं षड्वर्णाः परमेश्वरी ॥८॥
जङ्घायुग्मे सदा पातु बगला रिपुमोहिनी।
स्तम्भयेति पदं पृष्ठं पातु वर्णत्रयं मम ॥९॥
जिह्वावर्णद्वयं पातु गुल्फौ मे कीलयेति च।
पादोर्ध्वं सर्वदा पातु बुद्धिं पादतले मम ॥१०॥
विनाशयपदं पातु पादाङ्गुल्योर्नखानि मे।
ह्रीं बीजं सर्वदा पातु बुद्धीन्द्रियवचांसि मे ॥११॥
सर्वाङ्गं प्रणवः पातु स्वाहा रोमाणि मेऽवतु।
ब्राह्मी पूर्वदले पातु चाग्नेय्यां विष्णुवल्लभा ॥१२॥
माहेशी दक्षिणे पातु चामुण्डा राक्षसेऽवतु।
कौमारी पश्चिमे पातु वायव्ये चापराजिता ॥१३॥
वाराही चोत्तरे पातु नारसिंही शिवेऽवतु।
ऊर्ध्वं पातु महालक्ष्मीः पाताले शारदाऽवतु ॥१४॥

इत्यष्टौ शक्तयः पान्तु सायुधाश्च सवाहनाः।
राजद्वारे महादुर्गे पातु मां गणनायकः ॥१५॥
श्मशाने जलमध्ये च भैरवश्च सदाऽवतु।
द्विभुजा रक्तवसनाः सर्वाभरणभूषिताः ॥१६॥
योगिन्यः सर्वदा पान्तु महारण्ये सदा मम।
इति ते कथितं देवि! कवचं परमाद्भुतम् ॥१७॥
श्रीविश्वविजयं नाम कीर्तिश्रीविजयप्रदाम्।
अपुत्रो लभते पुत्रं धीरं शूरं शतायुषम् ॥१८॥
निर्धनो धनमाप्नोति कवचस्यास्य पाठतः।
जपित्वा मन्त्रराजं तु ध्यात्वा श्रीबगलामुखीम् ॥१९॥
पठेदिदं हि कवचं निशायां नियमात् तु यः।
यद् यत् कामयते कामं साध्यासाध्ये महीतले ॥२०॥
तत् तत् काममवाप्नोति सप्तरात्रेण शङ्करि।
गुरुं ध्यात्वा सुरां पीत्वा रात्रौ शक्तिसमन्वितः ॥२१॥
कवचं यः पठेद् देवि! तस्यासाध्यं न किञ्चन।
यं ध्यात्वा प्रजपेन्मन्त्रं सहस्रं कवचं पठेत् ॥२२॥
त्रिरात्रेण वशं याति मृत्योः तन्नात्र संशयः।
लिखित्वा प्रतिमां शत्रोः सतालेन हरिद्रया ॥२३॥
लिखित्वा हृदि तन्नाम तं ध्यात्वा प्रजपेत् मनुम्।
एकविंशद्दिनं यावत् प्रत्यहं च सहस्रकम् ॥२४॥
जप्त्वा पठेत् तु कवचं चतुर्विंशतिवारकम्।
संस्तम्भं जायते शत्रोर्नात्र कार्या विचारणा ॥२५॥
विवादे विजयं तस्य संग्रामे जयमाप्नुयात्।
श्मशाने च भयं नास्ति कवचस्य प्रभावतः ॥२६॥
नवनीतं चाभिमन्त्र्य स्त्रीणां दद्यान्महेश्वरि।
वन्ध्यायां जायते पुत्रो विद्याबलसमन्वितः ॥२७॥
श्मशानाङ्गारमादाय भौमे रात्रौ शनावथ।
पादोदकेन स्पृष्ट्वा च लिखेत् लोहशलाकया ॥२८॥
भूमौ शत्रोः स्वरूपं च हृदि नाम समालिखेत्।
हस्तं तद्धृदये दत्वा कवचं तिथिवारकम् ॥२९॥
ध्यात्वा जपेन्मन्त्रराजं नवरात्रं प्रयत्नतः।
म्रियते ज्वरदाहेन दशमेऽह्नि न संशयः ॥३०॥
भूर्जपत्रेष्विदं स्तोत्रमष्टगन्धेन संलिखेत्।
धारयेद् दक्षिणे बाहौ नारी वामभुजे तथा ॥३१॥

संग्रामे जयमाप्नोति नारी पुत्रवती भवेत् ।
ब्रह्मास्त्रादीनि शस्त्राणि नैव कृन्तति तं जनम् ॥३२॥
सम्पूज्य कवचं नित्यं पूजायाः फलमालभेत् ।
बृहस्पतिसमो वापि विभवे धनदोपमः ॥३३॥
कामतुल्यश्च नारीणां शत्रूणां च यमोपमः ।
कवितालहरी तस्य भवेद् गङ्गाप्रवाहवत् ॥३४॥
गद्यपद्यमयी वाणी भवेद् देवीप्रसादतः ।
एकादशशतं यावत् पुरश्चरणमुच्यते ॥३५॥
पुरश्चर्याविहीनं तु न चेदं फलदायकम् ।
न देयं परशिष्येभ्यो दुष्टेभ्यश्च विशेषतः ॥३६॥
देयं शिष्याय भक्ताय पञ्चत्वं चान्यथाऽऽप्नुयात् ।
इदं कवचमज्ञात्वा भजेद् यो बगलामुखीम् ।
शतकोटिं जपित्वा तु तस्य सिद्धिर्न जायते ॥३७॥
दाराढ्यो मनुजोऽस्य लक्षजपतः प्राप्नोति सिद्धिं परां
विद्यां श्रीविजयं तथा सुनियतं धीरं च वीरं वरम् ।
ब्रह्मास्त्राख्यमनुं विलिख्य नितरां भूर्जेऽष्टगन्धेन वै
धृत्वा राजपुरं व्रजन्ति खलु ते दासोऽस्ति तेषां नृपः ॥३८॥



## विश्वयामलोक्त-बगलामुख्यास्त्रैलोक्यविजयं कवचम्

### श्रीभैरव उवाच

शृणु देवि ! प्रवक्ष्यामि स्वरहस्यं च कामदम् ।
श्रुत्वा गोप्यं गुप्ततमं कुरु गुप्तं सुरेश्वरि ॥१॥
कवचं बगलामुख्याः सकलेष्टप्रदं कलौ ।
तत्सर्वस्वं परं गुह्यं गुप्तं च शरजन्मना ॥२॥
त्रैलोक्यविजयं नाम कवचेशं मनोरमम् ।
मन्त्रगर्भं ब्रह्ममयं सर्वविद्याविनायकम् ॥३॥
रहस्यं परमं ज्ञेयं साक्षादमृतरूपकम् ।
ब्रह्मविद्यामयं वर्म दुर्लभं प्राणिनां कलौ ॥४॥
पूर्णमेकोनपञ्चाशद्वर्णैरुक्तं महेश्वरि ।
त्वद्भक्त्या वच्मि देवेशि ! गोपनीयं स्वयोनिवत् ॥५॥

### श्रीदेव्युवाच

भगवन् ! करुणासार ! विश्वनाथ ! सुरेश्वर !
कर्मणा मनसा वाचा न वदामि कदाचन ॥१॥

**श्रीभैरव उवाच**

त्रैलोक्यविजयाख्यस्य कवचास्यास्य पार्वति ।
मनुगर्भस्य गुप्तस्य ऋषिर्देवोऽस्य भैरवः ॥१॥
उष्णिक्छन्दः समाख्यातं देवी श्रीबगलामुखी ।
बीज ह्लीं ॐ शक्तिः स्यात् स्वाहा कीलकमुच्यते ॥२॥
विनियोगः समाख्यातः त्रिवर्गफलप्राप्तये ।
देवि त्वं पठ वर्मैतन्मन्त्रगर्भं सुरेश्वरि ॥३॥
विना ध्यानं कुतः सिद्धिः सत्यमेतच्च पार्वति ।
चन्द्रोद्भासितमूर्धजां रिपुरसां मुण्डाक्षमालाकराम् ॥४॥
बालांसत्स्त्रकचञ्चलां मधुमदां रक्तां जटाजूटिनीं ।
शत्रुस्तम्भनकारिणीं शशिमुखीं पीताम्बरोद्भासिनीम् ॥५॥
प्रेतस्थां बगलामुखीं भगवतीं कारुण्यरूपां भजे
ॐ ह्लीं मम शिरः पातु देवी श्रीबगलामुखी ॥६॥
ॐ ऐं क्लीं पातु मे भालं देवी स्तम्भनकारिणी ।
ॐ अं इं हं भ्रुवौ पातु क्लेशहारिणी ॥७॥
ॐ हं पातु मे नेत्रे नारसिंही शुभङ्करी ।
ॐ ह्रीं श्रीं पातु मे गण्डौ अं आं इं भुवनेश्वरी ॥८॥
ॐ ऐं क्लीं सौः श्रुतौ पातु इं ईं उं च परेश्वरी ।
ॐ ह्लीं ह्रूं ह्लीं सदाव्यान्मे नासां ह्लीं सरस्वती ॥९॥
ॐ ह्रां ह्रीं मे मुखं पातु लीं एं ऐं छिन्नमस्तका ।
ॐ श्रीं वं मेऽधरौ पातु ओं औं दक्षिणकालिका ॥१०॥
ॐ क्लीं श्रीं शिरसः पातु कं खं गं घं च सारिका ।
ॐ ह्रीं ह्रूं भैरवी पातु ङं अं अः त्रिपुरेश्वरी ॥११॥
ॐ ऐं सौः मे हनुं पातु चं छं जं च मनोन्मनी ।
ॐ श्रीं श्रीं मे गलं पातु झं ञं टं ठं गणेश्वरी ॥१२॥
ॐ स्कन्धौ मेऽव्याद् डं ढं णं हूं हूं चैव तु तोतला ।
ॐ ह्रीं श्रीं मे भुजौ पातु तं थं दं वरवर्णिनी ॥१३॥
ऐं क्लीं सौः स्तनौ पातु धं नं पं परमेश्वरी ।
क्रों क्रों मे रक्षयेद् वक्षः फं बं भं भगवासिनी ॥१४॥
ॐ ह्रीं रां पातु कुक्षि मे मं यं रं वह्निवल्लभा ।
ॐ श्रीं ह्रूं पातु मे पार्श्वौ लं बं लम्बोदरन् प्रसूः ॥१५॥
ॐ श्रीं ह्रीं हूं पातु मे नाभिं शं षं षण्मुखपालिनी ।
ॐ ऐं सौः पातु मे पृष्ठं सं हं हाटकरूपिणी ॥१६॥

ॐ क्लीं ऐं कटिं पातु पञ्चाशद्वर्णमालिका।
ॐ ऐं क्लीं पातु मे गुह्यं अं आं कं गुह्यकेश्वरी ॥१७॥
ॐ श्रीं ऊं ऋं सदाऽव्यान्मे इं ईं खं खां स्वरूपिणी।
ॐ जुं सः पातु मे जङ्घे रुं रूं धं अघहारिणी ॥१८॥
श्रीं ह्रीं पातु मे जानू उं ऊं णं गणवल्लभा।
ॐ श्रीं सः पातु मे गुल्फौ लिं लीं ऊं चं चण्डिका ॥१९॥
ॐ ऐं ह्रीं पातु मे वाणी एं ऐं छं जं जगत्प्रिया।
ॐ श्रीं क्लीं पातु पादौ मे झं ञं टं ठं भगोदरी ॥२०॥
ॐ ह्रीं सर्वं वपुः पातु अं अः त्रिपुरमालिनी।
ॐ ह्रीं पूर्वे सदाऽव्यान्मे झं झां डं ढं शिखामुखी ॥२१॥
ॐ सौः याम्यं सदाऽव्यान्मे इं ईं णं तं च तारिणी।
ॐ वारुण्यां च वाराही उं थं दं धं च कम्पिला ॥२२॥
ॐ श्रीं मां पातु चैशान्यां पातु ॐ नं जनेश्वरी।
ॐ श्रीं मां चाग्नेयां ऋं भं मं धं च योगिनी ॥२३॥
ॐ ऐं मां पातु नैर्ऋत्यां लृं लं राजेश्वरी तथा।
ॐ श्रीं पातु वायव्यां लृं लं वीतकेशिनी।
ॐ प्रभाते च मां पातु लीं लं वागीश्वरी सदा ॥२४॥
ॐ मध्याह्ने च मां पातु ऐं क्षं शङ्करवल्लभा।
श्रीं ह्रीं क्लीं पातु सायं ऐं आं शाकम्भरी सदा ॥२५॥
ॐ ह्रीं निशादौ मां पातु ॐ सं सागरवासिनी।
क्लीं निशीथे च मां पातु ॐ हं हरिहरेश्वरी ॥२६॥
क्लीं ब्राह्मो मुहूर्तेऽव्याद् लं लां त्रिपुरसुन्दरी।
विसर्गा तु यत्स्थानं वर्जितं कवचेन तु ॥२७॥
क्लीं तन्मे सकलं पातु अं क्षं ह्रीं बगलामुखी।
इतीदं कवचं दिव्यं मन्त्राक्षरमयं परम् ॥२८॥
त्रैलोक्यविजयं नाम सर्ववर्णमयं स्मृतम्।
अप्रकाश्यं सदा देवि! श्रोतव्यं च वाचिकम् ॥२९॥
दुर्जनायाकुलीनस्य दीक्षाहीनाय पार्वति।
न दातव्यं न दातव्यमित्याज्ञा पारमेश्वरी ॥३०॥
दीक्षाकार्यविहीनाय शक्तिभक्तिविरोधिने।
कवचस्यास्य पठनात् साधको दीक्षितो भवेत् ॥३१॥
कवचेशमिदं गोप्यं सिद्धविद्यामयं परम्।
ब्रह्मविद्यामयं गोप्यं यथेष्टफलदं शिवे ॥३२॥

न कस्य कथितं चैतद् त्रैलोक्यविजयेश्वरम्।
अस्य स्मरणमात्रेण देवी सद्यो वशी भवेत् ।।३३।।
पठनाद् धारणादस्य कवचेशस्य साधकः।
कलौ विचरते वीरो यथा श्रीबगलामुखी ।।३४।।
इदं वर्म स्मरेन्मन्त्री संग्रामे प्रविशेद् यदा।
युयुत्सुः पठन् कवचं साधको विजयी भेवत् ।।३५।।
शत्रुं कालसमानं तु जित्वा स्वगृहमेति सः।
मूर्ध्नि धृत्वा यः कवचं मन्त्रगर्भं सुसाधकः ।।३६।।
ब्रह्माद्यमरान् सर्वान् सहसा वशमानयेत्।
धृत्वा गले तु कवचं साधकस्य महेश्वरि ।।३७।।
वशमायान्ति सहसा रम्भाद्यप्सरसां गणाः।
उत्पातेषु च घोरेषु भयेषु विविधेषु च ।।३८।।
रोगेषु च कवचेशं मन्त्रगर्भं पठेन्नरः।
कर्मणा मनसा वाचा तद्भयं शान्तिमेष्यति ।।३९।।
श्रीदेव्या बगलामुख्याः कवचेशं मयोदितम्।
त्रैलोक्यविजयं नाम पुत्रपौत्रधनप्रदम् ।।४०।।
ऋणं च हरते सम्यक् लक्ष्मीर्भोगविवर्धिनी।
वन्ध्या जनयते कुक्षौ पुत्ररत्नं न चान्यथा ।।४१।।
मृतवत्सा च विभूयात् कवचं च गले सदा।
दीर्घायुर्व्याधिहीनश्च तत्पुत्रो वर्धतेऽनिशम् ।।४२।।
इतीदं बगलामुख्याः कवचेशं सुदुर्लभम्।
त्रैलोक्यविजयं नाम न देयं यस्य कस्यचित् ।।४३।।
अकुलीनाय मूढाय भक्तिहीनाय दम्भिने।
लोभयुक्ताय देवेशि ! न दातव्यं कदाचन ।।४४।।
लोभदम्भविहीनाय कवचेशं प्रदीयताम्।
अभक्तेभ्यो अपुत्रेभ्यो दत्वा कुष्ठी भवेन्नरः ।।४५।।
रवौ रात्रौ च सुस्नातः पूजागृहगतः सुधीः।
दीपमुज्ज्वाल्य मूलेन पठेद्धर्मेदमुत्तमम् ।।४६।।
प्राप्तौ सत्यां त्रिरात्रौ हि राजा तद्गृहमेष्यति।
मण्डलेशो महेशानि देवि ! सत्यं न संशयः ।।४७।।
इदं तु कवचेशं तु मया प्रोक्तं नगात्मजे।
गोप्यं गुह्यतरं देवि ! गोपनीयं स्वयोनिवत् ।।४८।।

●

## रुद्रयामलोक्त-बगलाप्रत्यङ्गिराकवचम्

**श्रीशिव उवाच**

अधुनाऽहं प्रवक्ष्यामि बगलायाः सुदुर्लभम्।
यस्य पठनमात्रेण पवनोऽपि स्थिरायते॥
प्रत्यङ्गिरा तां देवेशि शृणुस्व कमलानने।
यस्य स्मरणमात्रेण शत्रवो विलयं गताः॥

**श्रीदेव्युवाच**

स्नेहोऽस्ति यदि मे नाथ! संसारार्णवतारक।
तथा कथय मां शम्भो बगला प्रत्यङ्गिरा मम॥

**श्रीभैरव उवाच**

यं यं प्रार्थयते मन्त्री हठात्तं तमवाप्नुयात्।
विद्वेषणाकर्षणे च स्तम्भनं वैरिणां विभो॥
उच्चाटनं मारणं च येन कर्तुं क्षमो भवेत्।
तत्सर्वं ब्रूहि मे देव! यदि मां दयसे हर॥

**श्रीसदाशिव उवाच**

अधुना हि महादेवि! परानिष्ठा मतिर्भवेत्!
अतएव महेशानि! किञ्चिन्न वक्तुमर्हसि॥

**श्रीपार्वत्युवाच**

जिघांसन्तं जिघांसीयात्र तेन ब्रह्महा भवेत्।
श्रुतिरेषा हि गिरिश! कथं मां त्वं निनिन्दसि॥

**श्रीशिव उवाच**

साधु साधु प्रवक्ष्यामि शृणुष्वावहितानघे।
प्रत्यङ्गिरां बगलायाः सर्वशत्रुनिवारिणीम्॥
नाशिनीं सर्वदुष्टानां सर्वपापौघहारिणीम्।
सर्वप्राणिहितां देवीं सर्वदुःखविनाशिनीम्॥
भोगदां मोक्षदां चैव राज्यसौभाग्यदायिनीम्।
मन्त्रदोषप्रमोचनीं ग्रहदोषनिवारिणीम्॥

अस्य श्रीबगलाप्रत्यङ्गिरामन्त्रस्य नारद ऋषिस्त्रिष्टुप् छन्दः प्रत्यङ्गिरा देवता ह्लीं बीजं हूँ शक्तिः ह्रीं कीलकं ह्लीं ह्लीं ह्लीं ह्लीं प्रत्यङ्गिरा मम शत्रुविनाशे विनियोगः।

ॐ प्रत्यङ्गिरायै नमः प्रत्यङ्गिरे सकलकामान् साधय मम रक्षां कुरु कुरु सर्वान् शत्रून् खादय खादय मारय मारय घातय घातय ॐ ह्रीं फट् स्वाहा।

ॐ भ्रामरी स्तम्भिनी देवी क्षोभिणी मोहिनी तथा।
संहारिणी द्राविणी च जृम्भिणी रौद्ररूपिणी॥
इत्यष्टौ शक्तयो देवि! शत्रुपक्षे नियोजिताः।
धारयेत् कण्ठदेशे च सर्वशत्रुविनाशिनी॥

ॐ ह्लीं भ्रामरि सर्वशत्रून् भ्रामय भ्रामय ॐ ह्लीं स्वाहा।
ॐ ह्लीं स्तम्भिनि मम शत्रून् स्तम्भय स्तम्भय ॐ ह्लीं स्वाहा।
ॐ ह्लीं क्षोभिणि मम शत्रून् क्षोभय क्षोभय ॐ ह्लीं स्वाहा।
ॐ ह्लीं मोहिनि मम शत्रून् मोहय मोहय ॐ ह्लीं स्वाहा।
ॐ ह्लीं संहारिणि मम शत्रून् संहारय संहारय ॐ ह्लीं स्वाहा।
ॐ ह्लीं द्राविणि मम शत्रून् द्रावय द्रावय ॐ ह्लीं स्वाहा।
ॐ ह्लीं जृम्भिणि मम शत्रून् जृम्भय जृम्भय ॐ ह्लीं स्वाहा।
ॐ ह्लीं रौद्रि मम शत्रून् सन्तापय सन्तापय ॐ ह्लीं स्वाहा।

इयं विद्या महाविद्या सर्वशत्रुनिवारिणी।
धारिता साधकेन्द्रेण सर्वान् दुष्टान् विनाशयेत्॥
त्रिसन्ध्यमेकसन्ध्यं वा यः पठेत्स्थिरमानसः।
न तस्य दुर्लभं लोके कल्पवृक्ष इव स्थितः॥
यं यं स्पृशति हस्तेन यं यं पश्यति चक्षुषा।
स एव दासतां याति सारात्सारमिमं मनुम्॥



## श्रीबगलामुखीशत्रुविनाशककवचम्

श्रीगणेशाय नमः। श्रीपीताम्बरायै नमः।

### श्रीदेव्युवाच

नमस्ते शम्भवे तुभ्यं नमस्ते शशिशेखर।
त्वत्प्रसादाद्द्रुतं सर्वमधुना कवचं वद॥१॥

### श्रीशिव उवाच

शृणु देवि! प्रवक्ष्यामि कवचं परमाद्भुतम्।
यस्य स्मरणमात्रेण रिपोः स्तम्भो भवेत् क्षणात्॥२॥
कवचस्य च देवेशि! महामायाप्रभावतः।
पंक्तिश्छन्दः समुद्दिष्टं देवता बगलामुखी॥३॥
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः।
ॐकारो मे शिरः पातु ह्लींकारो वदनेऽवतु॥४॥
बगलामुखि दोर्युग्मं कण्ठे सर्वं सदाऽवतु।
दुष्टानां पातु हृदयं वाचं मुखं ततः पदम्॥५॥

उदरे सर्वदा पातु स्तम्भयेति सदा मम।
जिह्वां कीलय मे मातर्बगला सर्वदाऽवतु ॥६॥
बुद्धिं विनाशय पादौ तु ह्लीं ॐ मे दिग्विदिक्षु च।
स्वाहा मे सर्वदा पातु सर्वत्र सर्वसन्धिषु ॥७॥
इति ते कथितं देवि! कवचं परमाद्भुतम्।
यस्य स्मरणमात्रेण सर्वस्तम्भो भवेत् क्षणात् ॥८॥
यद्धृत्वा विविधा दैत्या वासवेन हताः पुरा।
यस्य प्रसादात् सिद्धोऽहं हरिः सत्त्वगुणान्वितः ॥९॥
वेधा सृष्टिं वितनुते कामः सर्वजगज्जयी।
लिखित्वा धारयेद् यस्तु कण्ठे वा दक्षिणे भुजे ॥१०॥
षट्कर्मसिद्धिस्तस्याशु मम तुल्यो भवेद् ध्रुवम्।
अज्ञात्वा कवचं देवि! तस्य मन्त्रो न सिध्यति ॥११॥



## वीरतन्त्रोक्त-बगलामुखीकवचम्

वीरतन्त्र के 'महोग्रतारा़कल्प' में भैरव-संवादात्मक एक बगलामुखीकवच विद्यमान है जो नीचे प्रस्तुत किया जा रहा है—

श्रीगणेशाय नमः। प्रथमं गुरुं ध्यायेत्।

**श्रीदेव्युवाच**

राज्ञां मण्डलिकादेवी बगलोपरि सर्पताम्।
सवर्णानां महादेव धनविप्लुतचेतसाम् ॥१॥
दुष्टसर्पादिजन्तूनां स्तम्भनं वद शङ्कर।

**श्रीभैरव उवाच**

पुरा कृतयुगे देवि! वातक्षोभ उपस्थिते ॥१॥
महार्णवानामेकत्वे गते क्षोभं भयं ययुः।
सेन्द्राः स वैष्णवाः सर्वे सभयं मामुपस्थिताः ॥२॥
शिव शङ्कर रुद्रेश रक्षाऽस्मान् शरणागतान्।
महावातादिसंक्षोभभयादस्मान् महार्णवात् ॥३॥
तच्छ्रुत्वाहं महेशानि कवचं पूर्वनिर्मितम्।
दत्तवान् सर्वदेवेभ्यो महाभयनिकृन्तनम् ॥४॥
कवचं बगलामुख्याः शिवप्राणप्रदं महत्।
पूर्वं भस्माऽसुरत्रासाद् भयव्याकुलितः स्वयम् ॥५॥
पच्यन्ते तेन मत्प्राणास्तान् ररक्ष महेश्वरी।
शिवप्राणप्रदं तस्य विश्रुतं रक्षकं परम् ॥६॥

ॐ अस्य श्रीबगलामुखीकवचस्य श्रीभैरव ऋषिः, उष्णिक् छन्दः, अद्वैतरूपिणी महास्तम्भनकारिणी श्रीपीताम्बरा देवी, स्थिरमाया बीजं, स्वाहा शक्तिः, प्रणवः कीलकम्, मम दूरस्थानां समीपस्थानां सर्वदुष्टानां वाक्पदगतिमुखस्तम्भनार्थं, परसैन्यपरमन्त्रयन्त्र-स्तम्भनार्थं, सर्वराजकुलमोहनार्थं, सर्वकामिनीजनवश्यार्थं श्रीबगलामुखीप्रीत्यर्थे जपे विनियोगः ।

ॐ ह्लां हृदयाय नमः, ॐ ह्लीं शिरसे स्वाहा, ॐ ह्लूं शिखायै वषट्, ॐ ह्लैं कवचाय हुम्, ॐ ह्लौं नेत्रत्रयाय वौषट्, ॐ ह्लः अस्त्राय फट् ।

इसी प्रकार न्यास भी करना चाहिए ।

**ध्यान**

मध्ये सुधाब्धिमणिमण्डितरत्नवेद्यां
सिंहासनोपरिगतां परिपीतवर्णाम् ।
पीताम्बराऽभरणमाल्यविभूषिताङ्गीं
देवीं नमामि धृतमुद्गरवैरिजिह्वाम् ॥
षट्त्रिंशदक्षरा विद्या बगला पातु मे शिरः ।
सहस्रारे गुरुः पातु शक्त्या परमयोज्ज्वलः ॥८॥
चिद्रूपा परमा शक्तिर्ललाटं शिवगेहिनी ।
भ्रूयुग्मं मे महाकाली नेत्रे मे परमेश्वरी ॥९॥
कर्णयुग्मं पीतपुष्पप्रिया मे पातु कपोलयोः ।
चिबुके परमा शक्तिरोष्ठयोः परमा कला ॥१०॥
वदनं सकलं पातु परब्रह्मस्वरूपिणी ।
पीतपुष्पार्चिता कण्ठं स्कन्धौ स्कन्दस्तनप्रदा ॥११॥
पीताम्बरा दक्षभुजां वामे वामाङ्कधारिणी ।
हृदयं च स्तनद्वन्द्वं नाभिं विश्वस्वरूपधृक् ॥१२॥
उदरं दुर्धरा मेऽव्यात् कटिं कन्दर्परूपधृक् ।
नितम्बौ नमिता देशे देवता जघनं रमा ॥१३॥
जङ्घायुग्ममनाधारा जानुनी जन्तुरूपिणी ।
ऊरू धर्मप्रदा मेऽव्याद् गुल्फे गगनरूपधृक् ॥१४॥
पादौ तु कूर्मरूपा सा पातु पादाङ्गुलीस्तथा ।
शिरसः पादपर्यन्तं पातु मां परमा कला ॥१५॥
गणेशरूपिणी मेऽव्यादाधारं सच्चतुर्दलम् ।
स्वाधिष्ठानं षड्दलं पातु मे ब्रह्मरूपधृक् ॥१६॥
मणिपूरे दशदले पातु केशवरूपिणी ।
हृत्पङ्कजे शैवभक्तिविशुद्धं जीवरूपिणी ॥१७॥

आज्ञाचक्रे बिन्दुरूपा परब्रह्मकुटुम्बिनी ।
ब्रह्मरन्ध्रसहस्रारे पङ्कजे स्वच्छरूपिणी ॥१८॥
पातु मां परमा शक्तिश्चमरी कुटिलालका ।
षट्त्रिंशदक्षरा विद्या पीता पीतवपुर्धरा ॥१९॥
पीतपुष्पार्चिता पीतनैवेद्याऽपि बलिप्रिया ।
सर्वाङ्गे मे शुभा पातु वैरिस्तम्भनकारिणी ॥२०॥
ब्रह्मरन्ध्रं तु परमा संसारार्णवतारिणी ।
मां तारयेत् महादेवी मनोवाञ्छितदायिनी ॥२१॥
आज्ञाचक्रे गुरुरूपा महाभयविनाशिनी ।
सर्वविद्याप्रदा पातु जिह्वां शास्त्रवपुर्धरा ॥२२॥
विशुद्धे षोडशदले जीवेश्वरवपुर्धरा ।
षट्त्रिंशत्तत्त्वरूपा सा कण्ठस्था मां शिवाऽवतु ॥२३॥
हृत्पङ्कजे भवानी सा हृद्यरूपा परात्मिका ।
स्वकीयानां महाशत्रून् विदारय विदारय ॥२४॥
मणिपूरे दशदले महाविष्णुस्वरूपिणी ।
दारयत्यखिलान् लोकान् महामाया परा तु सा ॥२५॥
प्रजापतिस्वरूपेयं स्वाधिष्ठाने तु षड्दले ।
सृष्टिस्थितिपरा विद्या मां पातु बगलामुखी ॥२६॥
गणेशरूपधृक् पातु ममाधारे चतुर्दले ।
षोडशस्वररूपेण पातु मां परमा कला ॥२७॥
कं खं गं घं तथा ङं चं छं जं झं ञं तथाऽवतु ।
ञं टं ठं डं ढं तथा णं तं थं दं धं तथाऽवतु ॥२८॥
नं पं फं तु शत्रुभ्यः पीतां मां ध्यानतत्परम् ।
बं भं मं यं विदारय शत्रून् मे वाक्स्वरूपिणी ॥२९॥
रं लं वं शं तथा षं सं शत्रोर्जिह्वां विदारय ।
मे वाचं मे मुखं जिह्वां सदा रक्षतु रक्षतु ॥३०॥
हं ळं क्षं सकलं पातु रक्ष मे परमं यशः ।
प्रणवं स्थिरमायां च तृतीयं कान्तिरूपिणी ॥३१॥
या तृतीयस्वरा युग्मं पादाद्यं स्वरपङ्कजम् ।
द्विस्तृतीयं दक्षनेत्रं सर्वदुष्ट बहुस्मृतम् ॥३२॥
द्वितीयं कीलयेति च तथा बुद्धिं विनाशय ।
षष्ठ्या वाचं मुखं पदं स्तम्भयाथोऽपि जिह्वया ॥३३॥
स्थिरमाया तथा तारं चान्ते वह्निवधूप्रिया ।
एषा विद्या महाविद्या शत्रुस्तम्भनकारिणी ॥३४॥

त्रिधा मन्त्रं तथोच्चार्य सर्वाङ्गे व्यापकं कुरु।
जयत्येव न सन्देहः शत्रून् घोरान् महाहवे॥३५॥
कुलालमृत्तिका ग्राह्या वामहस्तेन दीपकम्।
कृत्या प्रज्ज्वाल्य तैलेन वाऽग्रे स्थाप्यं ततो जपेत्॥३६॥
त्रिरात्रे स्तम्भयत्येव शत्रुसेनां महाहवे।
गौरवर्णां पीतपुष्पैर्बालां सम्पूज्य वामतः॥३७॥
न्यासान् विधाय तद्देहे जायायोगे जपेन्मनुम्।
पीतोपचारैस्तां शक्तिं सन्तोष्य परिवारणात्॥३८॥
वशयत्येव लोकेशं किं पुनः क्षुद्रमानुषम्।
वाचः स्तम्भनकामस्तु वीरशक्तिं शुभाननाम्॥३९॥
षोडशाष्टसुवर्णाद्यैरलङ्कृत्य भजन् शिवाम्।
सहस्रं मूलमन्त्रं तु जप्त्वा वाचस्पतेरपि॥४०॥
स्तम्भयत्यैव परमां वाचं किं पुनः क्षुद्रमानुषम्।
वशीकरणकामस्तु बद्ध्वा परिकरं दृढम्॥४१॥
शक्तिलिङ्गोपरि स्थाप्या त्रिसहस्रं जपेन्मनुम्।
इन्द्राणीं वशयत्येव किं पुनः क्षुद्रमानुषीम्॥४२॥
मण्डलाधीशं वशीकुर्याच्चोत्तराभिमुखः स्थितः।
सुन्दरीं षोडशीं शुभ्रां स्वाननां च शुचिस्मिताम्॥४३॥
तत्कुचौ च करे धृत्वा पीताद्यां हसिताननाम्।
लिङ्गे संस्थाप्य सञ्चुम्बन् मुखं पीतामनु जपेत्॥४४॥
त्रिसहस्रे महाराजं वशयत्येव नाऽन्यथा।
कृष्णाष्टमी समारभ्य यावत् कृष्णचतुर्दशी॥४५॥
नियतं तु सहस्रं च शापाऽनुग्रहसिद्धये।
येन केनाप्युपायेन बगलाभक्तितत्परः॥४६॥
स्तम्भयेत् सकलान् देवान् वशयत्येव शङ्करम्।
मारयेच्छत्रुसङ्घातं चालयेत् पर्वतानपि॥४७॥
देवान् स्थापयते चैन्द्रे दृष्ट्वा ज्वरविनाशनम्।
स्तम्भितं चैकधा देवि! तत् सकृच्चासकृज्जपन्॥४८॥
एका सा परमा विद्या महाशत्रुविदारिणी।
नास्तिके तस्करे दुष्टे मूढे पण्डितमानिनि॥४९॥
न देया दुर्जने विद्या शुभोदयमवाप्नुयात्।
सुशीलाय सुदातव्या गुरुभक्तिपराय च॥५०॥
विशुद्धाय महामन्त्रजापिने देयमुत्तमम्।
अस्य पार्वतीमाहात्म्यकवचस्य वरानने॥५१॥

महेन्द्रादौ रणे वाते प्रलये पर्युपस्थिते ।
स्तम्भिता चैकधा देवि ! स्मृत्वा तं सकृज्जपात् ।।५२।।
कृत्वा पुरा तु कवचं जपेन्मन्त्रं समाहितः ।
नान्यथा स्तम्भिनी विद्या सिद्धिः स्यादिति निश्चयम् ।।५३।।
(श्रीवीरतन्त्र : महोग्रताराकल्प)

●

## गायत्री-विधान

### बगलामुखीगायत्री

सांख्यायनतन्त्र के द्वादश पटल में गायत्री-विधान मिलता है। क्रौंचभेदन के प्रश्न के उत्तर में भगवान् शिव (ईश्वर) कहते हैं—

**क्रौञ्चभेदन उवाच**

नमस्ते सर्वसर्वेश गर्विताऽसुरभञ्जन ।
गायत्रीं बगलाख्यां च वद मे करुणाकर ।।

**ईश्वर उवाच**

मन्त्रोद्धारं प्रवक्ष्यामि मन्त्रमाहात्म्यमेव च ।
पुरश्चर्याप्रयोगं च वक्ष्येऽहं तव पुत्रक ।।
ब्रह्मास्त्राय पदं चोक्त्वा विद्महेति पदं तथा ।
स्तम्भनेति पदं चोक्त्वा तन्नः शब्दं ततो वदेत् ।।
बगलापदमुच्चार्यमुद्धरेच्च प्रचोदयात् ।
गायत्री बगला नाम्नी सर्वसिद्धिप्रदा भुवि ।।
ब्रह्मा ऋषिश्छन्दश्च गायत्र्यं समुदाहृतम् ।
देवता बगलानाम्नी चिन्मयी शक्तिरूपिणी ।।
ॐ बीजं ह्रीं शक्तिः कीलकं विद्महे पदम् ।
चतुर्लक्षं पुरश्चर्या तद्दशांशं च तर्पणम् ।।
तद्दशांशं हुनेदाज्यं तावद् ब्राह्मणभोजनम् ।
न्यासं ध्यानादिकं सर्वं कुर्यात्तन्मन्त्रराजवत् ।।
प्रयोगानथ वक्ष्यामि गायत्र्या बगलाह्वयाम् ।
तारादि प्रजपेन्मन्त्रं मोक्षार्थी च कुमारक ।।
कामार्थी प्रजपेन्मन्त्रं तारवाराहपूर्वकम् ।
सम्मोहनार्थं प्रजपेत् कामराजपुरःसरम् ।।
स्तम्भनार्थी जपेत् पुत्र बगलाबीजपूर्वकम् ।
विद्वेषणादौ प्रजपेत् हुङ्कारद्वयपूर्वकम् ।।
उच्चाटनार्थं प्रजपेत् शक्तिवाराहपूर्वकम् ।

वाराहशक्तिं वाराहं तच्च मायापुरःसरम् ॥
प्रजपेन्मन्त्रमेतद्धि मारणं भवति ध्रुवम् ।
वाग्भवादि जपेन्मन्त्रं विद्यासिद्धिर्भविष्यति ॥
बालादि प्रजपेन्मन्त्रं कन्यकां क्षितिमाप्नुयात् ।
वाराहीबीजमध्यस्थगायत्रीलक्षजापतः ॥
मूलाभो जायते तस्य अनायासेन पुत्रक ।
श्रीबीजादिं जपेत्पुत्र गायत्रीं बगलाह्वयाम् ॥
कुबेरसदृशः श्रीमान् जायते नात्र संशयः ।
तार्क्ष्यबीजादिकं मन्त्रं प्रजपेद् ध्यानपूर्वकम् ॥
नानाविषप्रयोगांश्च गररोगाऽऽदिनाशनम् ।
भैरवं बीजमादाय प्रजपेच्च कुमारक ॥
भूतप्रेतपिशाचाद्यास्तत्प्रयोगाद् व्यपोहति ।
जपेदमृतबीजादिं गायत्रीं बगलाह्वयाम् ॥
तापज्वरमहातापाच्छान्तिमाप्नोति पुत्रक ।
जपेच्च वायुबीजादिं गायत्रीं बगलाह्वयाम् ॥
क्षिप्रमुच्चाटनं तस्य भवेच्छङ्करभाषितम् ।
अग्निबीजादिगायत्रीं प्रजपेद् बगलाह्वयाम् ॥
तापेन महताऽऽविष्टः पश्चाच्छत्रुर्मृतो भवेत् ।
मायादिं प्रजपेन्मन्त्रं गायत्रीं बगलाह्वयाम् ॥
राजा वा राजपुत्रो वा मरणान्तवशो भवेत् ।
महामायादिगायत्रीं प्रजपेद् बगलाह्वयाम् ॥
इष्टसिद्धिर्भवेत्तस्य शिवस्य वचनं यथा ।
मन्त्रराजस्य गायत्रीं पादाद्यवयवां तथा ॥
गायत्रीं च विना मन्त्रो न सिध्यति कलौ युगे ।
पुरश्चरणकाले तु गायत्रीं प्रजपेन्नरः ॥
मूलविद्यादशांशं च मन्त्रसिद्धिर्भवेद् ध्रुवम् ।
त्यक्त्वा तां मन्त्रगायत्रीं यो जपेन्मन्त्रमादरात् ॥
कोटिकोटिजपेनाऽपि तस्य सिद्धिर्न जायते ।
जपसंख्या यत्र नोक्ता लक्षमेकं कुमारक ॥
दिनसंख्या यत्र नोक्ता पक्षमेकं न संशयः ।
गायत्री बगलानाम्नी बगलायाश्च जीवनम् ॥
मन्त्रादौ चाथ मन्त्रान्ते जपेद् ध्यानपुरःसरम् ।

## बगलोपासना में बगलागायत्री का महत्त्व

**बगलागायत्री का स्वरूप—**

गायत्री बगलानाम्नी सर्वसिद्धिप्रदा भुवि ।
ब्रह्मा ऋषिश्छन्दश्च गायत्र्यं समुदाहृतम् ॥
देवता बगलानाम्नी चिन्मयी शक्तिरूपिणी ।
ॐ बीजं ह्लीं शक्तिः कीलकं विद्महे पदम् ॥
चतुर्लक्षं पुरश्चर्या तद्दशांशं च तर्पणम् ।
तद्दशांशं हुनेदाज्यं तावद् ब्राह्मणभोजनम् ॥

**महत्त्व—**

गायत्रीं च विना मन्त्रो न सिद्ध्यति कलौ युगे ।
पुरश्चरणकाले तु गायत्रीं प्रजपेन्नरः ॥
त्यक्त्वा तां मन्त्रगायत्रीं यो जपेन्मन्त्रमादरात् ।
कोटिकोटिजपेनापि तस्य सिद्धिर्न जायते ॥
(सांख्यायनतन्त्र १२।२५-२७)



## बगलामुखी-पटल

(१) 'बगलामुखीं व्याख्यास्यामः' ॥१॥
(हम बगलामुखी की व्याख्या करते हैं ।)

(२) 'अष्टमी सा दशसु महाविद्यासु' ॥२॥
(वह महाविद्याओं में आठवीं (महाविद्या) है ।)

(३) 'स्तम्भनशक्तिर्बगलामुखी' ॥३॥
(बगलामुखी स्तम्भनशक्ति है ।)

(४) 'अध्यात्मं सा शङ्खिन्यां नाड्याम्' ॥४॥
(वह शङ्खिनी नाड़ी में आत्मा सहित स्थित है ।)

(५) 'अधिलोकं पितृयाने पथि' ॥५॥
(पितृयान के मार्ग में उसका लोक है ।)

(६) 'दण्डनाथा काचन मध्यमाया अधिदैवतम्' ॥६॥
(कोई मध्यमा की अधिष्ठात्री देवता 'दण्डनाथा' कहते हैं ।)

(७) 'रिपुस्तम्भनकामो बगलामुखीमुपासीत्' ॥७॥
(शत्रु के स्तम्भन की कामना रखने वाला व्यक्ति बगलामुखी की उपासना करे ।)

(८) 'अन्त:शत्रुस्तम्भनकामो वा' ॥८॥
(या आन्तरिक (काम-क्रोधादिक) शत्रुओं का स्तम्भन करने की आकांक्षा रखने वाले बगलामुखी की उपासना करे।)

(९) 'खेन्द्राग्निशान्तिचन्द्रैः संयुक्तैः' ॥९॥
('ख' (अर्थात् 'ह'), 'इन्द्र' (अर्थात् 'ल'), 'अग्नि' (अर्थात् 'र'), 'शान्ति' (अर्थात 'ई'), 'चन्द्र' (अर्थात् ँ)—इन सबके संयुक्त रूप के द्वारा निर्मित अक्षर अर्थात् बीज एकाक्षर मन्त्र 'ह्ल्रीं' से।)

(१०) 'शुद्धमुपासनमिन्द्रयोनिविद्यया' ॥१०॥
('इन्द्रयोनिविद्या' के द्वारा शुद्ध उपासना होती है।)

(११) 'इन्द्रयोनिश्च जिह्वामूले लम्बमानं तैजसं लिङ्गम्। तल्लक्ष्य ध्यानं तद् विद्या' ॥१॥
(इन्द्रयोनि अर्थात् जिह्वामूल में लम्ब भाव से सुस्थित तैजस लिङ्ग है। उसे लक्ष्य करके ध्यान करना ही यह विद्या है।)

(१२) 'अन्तर्वायुसञ्चारनिरोधेन वा' ॥१२॥
(अथवा अन्तर्वायु का सञ्चार रोक कर अर्थात् कुम्भक प्राणायाम के द्वारा।)

(१३) 'तं हठयोगमाहुः' ॥१३॥
(उसे हठयोग कहते हैं।)

(१४) 'यो वायुं स्तम्भयेत् स सर्वं स्तम्भयेत्' ॥१४॥
(जो वायु का स्तम्भन करता है वह सबका स्तम्भन कर देता है।)

## बगलाहृदय के पाठ का वैशिष्ट्य

बगलोपासना में 'बगलाहृदय' के पाठ की महत्ता यह है कि यदि मात्र बगलाहृदय का ही पाठ कर लिया जाय तो फिर साधक को—ध्यान, होम, जप, तर्पण इत्यादि की कोई आवश्यकता नहीं रह जाती। लिखा तो यहाँ तक गया है कि—

(१) इसके श्रवण मात्र से मन्त्र सिद्ध हो जाता है।

(२) इसका एक बार भी उच्चारण कर लिये जाने से सारे अभीष्ट पूरे हो जाते हैं।

(३) इसका स्मरण कर लेने मात्र से समस्त कार्यसिद्धि हो जाने के कारण अभिषेक, मन्त्रदीक्षा, शास्त्रविधि, कालावधि, कालविधि आदि सभी निरर्थक हैं।

(४) बगलाहृदय का मन्त्र ब्रह्मादिकादि के लिए भी दुर्लभ है। इसके सकृत् स्मरण मात्र से सारे वाञ्छित अभीष्ट निष्पादित हो जाते हैं।

(५) पङ्गु चलने लगता है।

(६) मूक बोलने लगता है।

(७) दरिद्र धनी हो जाता है।

(८) निन्दित व्यक्ति भी कीर्तिमान् हो जाता है।

(९) उन्मादी व्यक्ति भी कवीश्वर हो जाता है।

(१०) बगलाहृदय मन्त्र के सकृत्पाठी का उल्लङ्घन करने मात्र से ब्रह्मा भी सकुशल नही रह सकते। बगलाहृदय परम सन्तोष प्रदान करता है और सिद्धियाँ देता है, अत: इसका जप अवश्य करना चाहिए—

'येन केनोपायेन क्रौञ्चभेदन तच्छृणु।
हृन्मत्रं जपते येन वाञ्छितं फलमाप्नुयात्' ॥

इसके लिए ध्यानादिक की अनिवार्यता भी नहीं है—

'न ध्यानं न च होमश्च न जपो न च तर्पणम्।
सकृदुच्चारणान्मन्त्रं चिन्तितं च भवेद् ध्रुवम् ॥
न चाभिषेको न च मन्त्रदीक्षा, न वा विधि: कालविधिश्च देवता।
× × × × × ×
दरिद्रो भवति श्रीमान् स्तब्धो भवति पण्डित:।
चतुरो मुखरश्चैव कीर्तिवान्निन्दितो भवेत्' ॥

(सांख्यायनतन्त्र)



## बगलामुखी-पटल

अथ प्रवक्ष्ये शत्रूणां स्तम्भिनीं बगलामुखीम्।
प्रणवो गगनं पृथिवी शान्तिबिन्दुर्युतं बग ॥१॥
ला मु साक्षो गदी सर्वदुष्टानां वा हलीन्दुयुक्।
मुदं पदं स्तम्भयान्ते जिह्वां कीलय वर्णका: ॥२॥
बुद्धिं विनाशयान्ते तु बीजं तारोऽग्निसुन्दरी।
षट्त्रिंशदक्षरो मन्त्र: नारदो मुनिरस्य तु ॥३॥
छन्दस्तु बृहती शेषं देवता बगलामुखी।
नेत्राक्षसायकनवपञ्चकाष्ठाभिरङ्गकम् ॥४॥

### ध्यान

सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लासिनीं
हेमाभाङ्गरुचिं शशाङ्कमुकुटां सच्चम्पकस्रग्युताम्।
हस्तैर्मुद्गरपाशवज्ररसना: सम्बिभ्रतीं भूषणै-
र्व्याप्ताङ्गीं बगलामुखीं त्रिजगतां संस्तम्भिनीं चिन्तयेत् ॥५॥
एवं ध्यात्वा जपेल्लक्षमयुतं चम्पकोद्भवै:।
कुसुमैर्जुहुयात् पीठे पूर्वोक्ते पूजयेदिमाम् ॥६॥

चन्दनागुरुचन्द्राद्यैः पूजार्थं यन्त्रमालिखेत् ।
त्रिकोणषड्दलाष्टास्रषोडशारधरा पुरे ॥७॥
मध्ये सम्पूजयेद् देवीं कोणे सत्त्वादिकान् गुणान् ।
षट्कोणेषु षडङ्गानि मातृभैरवसंयुताः ॥८॥
सम्पूज्याऽष्टदले पद्मे षोडशारे यजेदिमाः ।
मङ्गला स्तम्भिनी चैव जृम्भिणी मोहिनी तथा ॥९॥
वश्या बला बलाका च भूधरा कल्मषाऽभिधा ।
धात्री च कलना कालकर्षिणी भ्रामिकाऽपि च ॥१०॥
मन्दगमना भोगस्था भाविका षोडशी स्मृता ।
भूगृहस्य चतुर्दिक्षु पूर्वाऽऽदिषु यजेत् क्रमात् ॥११॥
गणेशं बटुकं चापि योगिनीं क्षेत्रपालकम् ।
इन्द्रादींश्च ततो बाह्ये निजाऽऽयुधसमन्वितान् ॥१२॥
इत्थं सिद्धमनुर्मन्त्री स्तम्भयेद् देवताऽऽदिकान् ।
पीतवस्त्रस्तदासीनः पीतमाल्याऽनुलेपनः ॥१३॥
पीतपुष्पैर्यजेद्देवीं हरिद्रोत्थस्रजा जपन् ।
पीतां ध्यायन् भगवतीं प्रयोगेष्वयुतं जपेत् ॥१४॥
त्रिमध्वाऽऽज्यतिलैर्होमो नृणां वश्यकरो मतः ।
मधुरत्रितयाक्तैः स्यादाकर्षो लवणैर्ध्रुवम् ॥१५॥
तैलाभ्यक्तैर्निम्बपत्रैर्होमो विद्वेषकारकः ।
ताललवणहरिद्राभिर्द्विषां संस्तम्भनं भवेत् ॥१६॥
अङ्गारधूमं राजीश्च माहिषं गुग्गुलं निशि ।
श्मशानपावके हुत्वा नाशयेदचिरादरीन् ॥१७॥
गरुतो गृद्ध्रकाकानां कटुतैलबिभीतकम् ।
गृहधूमचितावह्नौ हुत्वा प्रोच्चाटयेद् रिपून् ॥१८॥
दूर्वागुडूचीलाजान् यो मधुरत्रितयाऽन्वितान् ।
जुहोति सोऽखिलान् रोगान् शमयेद् दर्शनादपि ॥१९॥
पर्वताग्रे महारण्ये नदीसङ्गे शिवालये ।
ब्रह्मचर्यरतो लक्षं जपेदखिलसिद्धये ॥२०॥
एकवर्णगवीदुग्धं शर्करामधुसंयुतम् ।
त्रिशतं मन्त्रितं पीतं हन्याद् विषपराभवम् ॥२१॥
श्वेतपालाशकाष्ठेन रचिते रम्यपादुके ।
असक्तरञ्जिते लक्षं मन्त्रयेन्मनुनाऽमुना ॥२२॥
तदारूढः पुमान् गच्छेत् क्षणेन शतयोजनम् ।
पारदं च शिला तालं पिष्टं मधुसमन्वितम् ॥२३॥

मनुना मन्त्रयेल्लक्षं लिम्पेत्तेनाऽखिलां तनुम्।
अदृश्यः स्यान्नृणामेष आश्चर्यं दृश्यतामिदम्॥२४॥
षट्कोणे विलिखेद्बीजं साध्यनामान्वितं मनोः।
हरितालनिशाचूर्णैरुन्मत्तरससंयुतैः ॥२५॥
शेषाऽक्षरैः समा बीजं धरागेहविराजितम्।
तद्यन्त्रं स्थापितप्राणपीतसूत्रेण वेष्टयेत्॥२६॥
भ्राम्यत्कुलालचक्रस्थां गृहीत्वा मृत्तिकां तथा।
रचयेद् वृषभं रम्यं यन्त्रं तन्मध्यतः क्षिपेत्॥२७॥
हरितालेन संलिप्य वृषभं प्रत्यहमर्चयेत्।
स्तम्भयेद् विद्विषां वाचं गतिं कार्यं परम्पराम्॥२८॥
आदाय वामहस्तेन प्रेतभूमिस्थखर्परम्।
अङ्गारेण चितास्थेन तत्र यन्त्रं समालिखेत्॥२९॥
मन्त्रितं निहितं भूमौ रिपूणां स्तम्भयेद् गतिम्।
प्रेतवस्त्रे लिखेद् यन्त्रमङ्गारेण च तत्पुनः॥३०॥
मण्डूकवदने न्यस्येत् पीतसूत्रेण वेष्टयेत्।
पूजितं पीतपुष्पैस्तद् वाचं संस्तम्भयेद् द्विषाम्॥३१॥
यद्भूमौ भविता दिव्यं तत्र यन्त्रं समालिखेत्।
मार्जितं तद् वृषापत्रैर्दिव्यस्तम्भनकृद् भवेत्॥३२॥
इन्द्रवारुणिकामूलं सप्तांशो मनुमन्त्रितम्।
क्षिप्तं जले दिव्यकृत्तं जलस्तम्भनकारकम्॥३३॥
किं भूरिणा साधकेन मन्त्रः सम्यगुपासितः।
शत्रूणां गतिबुद्ध्यादेः स्तम्भनो नात्र संशयः॥३४॥

●

## सिद्धेश्वरतन्त्रोक्त-बगलाहृदयस्तोत्रम्

ॐ अस्य श्रीबगलामुखीहृदयमालामन्त्रस्य नारद ऋषिः, अनुष्टुप् छन्दः, श्रीबगलामुखी देवता, ह्लीं बीजं, क्लीं शक्तिः, ऐं कीलकं, श्रीबगलामुखीवरप्रसादसिद्ध्यर्थे जपे विनियोगः।

**अथ न्यासः**—ॐ नारदऋषये नमः शिरसि, ॐ अनुष्टुप्छन्दसे नमो मुखे, ॐ श्रीबगलामुख्यै देवतायै नमः हृदये, ॐ ह्लीं बीजाय नमो गुह्ये, ॐ क्लीं शक्तये नमः पादयोः, ॐ ऐं कीलकाय नमः सर्वाङ्गे।

**अथ कराङ्गन्यासौ**। ॐ ह्लीं अङ्गुष्ठाभ्यां नमः, ॐ क्लीं तर्जनीभ्यां नमः, ॐ ऐं मध्यमाभ्यां नमः, ॐ ह्लीं अनामिकाभ्यां नमः, ॐ क्लीं कनिष्ठिकाभ्यां नमः, ॐ ऐं करतलकरपृष्ठाभ्यां नमः। ॐ ह्लीं हृदयाय नमः। ॐ क्लीं शिरसे स्वाहा। ॐ ऐं शिखायै वषट्। ॐ ह्लीं कवचाय हुम्। ॐ क्लीं नेत्रत्रयाय वौषट्। ॐ ऐं अस्त्राय फट्। ॐ ह्लीं क्लीं ऐं इति दिग्बन्धः।

पीताम्बरां पीतमाल्यां पीताभरणभूषिताम् ।
पीतकञ्जपदद्वन्द्वां बगलां चिन्तयेऽनिशम् ॥

इति ध्यात्वा सम्पूज्य च—

पीतशङ्खगदाहस्ते पीतचन्दनचर्चिते ।
बगले मे वरं देहि शत्रुसङ्घविदारिणि ॥

इति सम्प्रार्थ्य 'ॐ ह्लीं क्लीं ऐं बगलामुख्यै गदाधारिण्यै प्रेतासनाध्यासिन्यै स्वाहा' इति मन्त्रं जपित्वा पुनः पूर्ववद् हृदयादिषडङ्गन्यासं कृत्वा स्तोत्रं पठेत् तद् यथा—

वन्देऽहं बगलां देवीं पीतभूषणभूषिताम् ।
तेजोरूपमयीं देवीं पीततेजःस्वरूपिणीम् ॥१॥
गदाभ्रमणभिन्नाभ्रां भृकुटीभीषणाननाम् ।
भीषयन्तीं भीमशत्रून् भजे भव्यस्य भक्तिदाम् ॥२॥
पूर्णचन्द्रसमानास्यां पीतगन्धानुलेपनाम् ।
पीताम्बरपरीधानां पवित्रामाश्रयाम्यहम् ॥३॥
पालयन्तीमनुपलं प्रसमीक्ष्याऽवनीतले ।
पीताचाररतां भक्तांस्ताम्भवानीं भजाम्यहम् ॥४॥
पीतपद्मपदद्वन्द्वां चम्पकारण्यरूपिणीम् ।
पीतावतंसां परमां वन्दे पद्मजवन्दिताम् ॥५॥
लसच्चारुसिञ्जत्सुमञ्जीरपादां
चलत्स्वर्णकर्णावतंसाञ्चिता स्याम् ।
वलत्पीतचन्द्राननां चन्द्रवन्द्यां
भजे पद्मजादीऽयसत्पादपद्माम् ॥६॥
सुपीताभयामालया पूतमन्त्रं
परं ते जपन्तो जयं संलभन्ते ।
रणे रागरोषाप्लुतानां रिपूणां
विवादे बलाद्वैरकृदघातमातः ॥७॥
भरत्पीतभास्वत्प्रभाहस्कराभां
गदागञ्जितामित्रगर्वां गरिष्ठाम् ।
गरीयो गुणागारगात्रां गुणाढ्यां
गणेशादिगम्यां श्रये निर्गुणाढ्याम् ॥८॥
जना ये जपन्त्युग्रबीजं जगत्सु
परं प्रत्यहं ते स्मरन्तः स्वरूपम् ।
भवेद् वादिनां वाङ्मुखस्तम्भ आद्ये
जयो जायते जल्पतामाशु तेषाम् ॥९॥

तव ध्याननिष्ठाप्रतिष्ठात्मप्रज्ञा-
वतां पादपद्मार्चने प्रेमयुक्ताः ।
प्रसन्ना नृपाः प्राकृताः पण्डिता वा
पुराणादिका दासतुल्या भवन्ति ॥१०॥
नमामस्ते मातः कनककमनीयाङ्घ्रिजलजं
बलद्विद्युद्वर्णां घनतिमिरविध्वंसकरणम् ।
भवाब्धौ मग्नात्मोत्तरणकरणं सर्वशरणम्
प्रपन्नानां मातर्जगति बगले दुःखदमनम् ॥११॥
ज्वलज्ज्योत्स्नारत्नाकरमणिविषक्ताङ्कभवनं
स्मरामस्ते धाम स्मरहरहरीन्द्रेन्दुप्रमुखैः ।
अहोरात्रं प्रातः प्रणयनवनीयं सुविशदम्
परं पीताकारं परिचितमणिद्वीपवसनम् ॥१२॥
वदामस्ते मातः श्रुतिसुखकरं नाम ललितं
लसन्मात्रावर्णं जगति बगलेति प्रचरितम् ।
चलन्तस्तिष्ठन्तो वयमुपविशन्तोऽपि शयने
भजामो यच्छ्रेयो दिवि दुरवलभ्यं दिविषदाम् ॥१३॥
पदार्चायां प्रीतिः प्रतिदिनमपूर्वा प्रभवतु
यथा ते प्रासन्न्यं प्रतिपलमपेक्ष्यं प्रणमताम् ।
अनल्पं तन्मातर्भवति भृतभक्त्या भवतु नो
दिशातः सद्भक्तिं भुवि भगवतां भूरि भवदाम् ॥१४॥
मम सकलरिपूणां वाङ्मुखे स्तम्भयाशु
भगवति रिपुजिह्वां कीलय प्रस्थतुल्याम् ।
व्यवसितखलबुद्धिं नाशयाऽशु प्रगल्भाम्
मम कुरु बहुकार्यं सत्कृपेऽम्ब प्रसीद ॥१५॥
व्रजतु मम रिपूणां सद्मनि प्रेतसंस्था
करधृतगदया तान् घातयित्वाऽशु रोषात् ।
सघनवसनधान्यं सद्म तेषां प्रदह्य
पुनरपि बगला स्वस्थानमायातु शीघ्रम् ॥१६॥
करधृतरिपुजिह्वापीडनं व्यग्रहस्ताम्
पुनरपि गदया तांस्ताडयन्तीं सुतन्त्राम् ।
प्रणतसुरगणानां पालिकां पीतवस्त्रां
बहुबलबगलान्तां पीतवस्त्रां नमामः ॥१७॥
हृदयवचनकायैः कुर्वतां भक्तिपुञ्जं
प्रकटति करुणार्द्रां प्रीणति जल्पतीति ।

धनमथ बहुधान्यं पुत्रपौत्रादिवृद्धिः
सकलमपि किमेभ्यो देयमेवं त्ववश्यम् ॥१८॥
तव चरणसरोजं सर्वदा सेव्यमानं
द्रुहिणहरिहराद्यैर्देववृन्दैः शरण्यम् ।
मृदुलमपि शरं ते शर्मदं सूरिसेव्यं
वयमिह करवामो मातरेतद् विधेयम् ॥१९॥
बगलाहृदयस्तोत्रमिदं भक्तिसमन्वितः ।
पठेद् यो बगला तस्य प्रसन्ना पाठतो भवेत् ॥२०॥
पीताध्यानपरो भक्तो यः श्रिणोत्यविकल्पतः ।
निष्कल्मषो भवेन्मर्त्यो मृतो मोक्षमवाप्नुयात् ॥२१॥
आश्विनस्य सिते पक्षे महाष्टम्यां दिवानिशम् ।
यस्त्विदं पठते प्रेम्णा बगलाप्रीतिमेति सः ॥२२॥
देव्यालये पठन्मर्त्यो बगलां ध्यायतीश्वरीम् ।
पीतवस्त्रावृतो यस्तु तस्य नश्यन्ति शत्रवः ॥२३॥
पीताचाररतो नित्यं पीतभूषां विचिन्तयन् ।
बगलायाः पठेन्नित्यं हृदयस्तोत्रमुत्तमम् ॥२४॥
न किञ्चिद्दुर्लभं तस्य दृश्यते जगतीतले ।
शत्रवो ग्लानिमायान्ति तस्य दर्शनमात्रतः ॥२५॥



## भगवती बगलामुखी के अष्टोत्तरशतनाम

## विष्णुयामलोक्त बगलाऽष्टोत्तरशतनामस्तोत्रम्

**श्रीनारद उवाच**

भगवन् ! देवदेवेश ! सृष्टिस्थितिलयात्मकम् ।
शतमष्टोत्तरं नाम्नां बगलाया वदाऽधुना ॥१॥

**श्रीभगवानुवाच**

शृणु वत्स ! प्रवक्ष्यामि नाम्नामष्टोत्तरं शतम् ।
पिताम्बर्या महादेव्याः स्तोत्रं पापप्रणाशनम् ॥२॥
यस्य प्रपठनात् सद्यो वादी मूको भवेत् क्षणात् ।
रिपूणां स्तम्भनं याति सत्यं सत्यं वदाम्यहम् ॥३॥

ॐ अस्य पीताम्बर्यष्टोत्तरशतनामस्तोत्रस्य सदाशिव ऋषिः, अनुष्टुप् छन्दः, श्री-पीताम्बरी देवता, श्रीपीताम्बरीप्रीतये जपे विनियोगः ।

ॐ बगला विष्णुवनिता विष्णुशङ्करभामिनी ।
बहुला वेदमाता च महाविष्णुप्रसूरपि ॥१॥

महामत्स्या महाकूर्मा महावाराहरूपिणी ।
नरसिंहप्रिया रम्या वामना बटुरूपिणी ॥२॥
जामदग्न्यस्वरूपा च रामा रामप्रपूजिता ।
कृष्णा कपर्दिनी कृत्या कलहा कलविकारिणी ॥३॥
बुद्धिरूपा बुद्धिभार्या बौद्धपाखण्डखण्डिनी ।
कल्किरूपा कलिहरा कलिदुर्गतिनाशिनी ॥४॥
कोटिसूर्यप्रतीकाशा कोटिकन्दर्पमोहिनी ।
केवला कठिना काली कलाकैवल्यदायिनी ॥५॥
केशवी केशवाराध्या किशोरी केशवस्तुता ।
रुद्ररूपा रुद्रमूर्ती रुद्राणी रुद्रदेवता ॥६॥
नक्षत्ररूपा नक्षत्रा नक्षत्रेशप्रपूजिता ।
नक्षत्रेशप्रिया नित्या नक्षत्रपतिवन्दिता ॥७॥
नागिनी नागजननी नागराजप्रवन्दिता ।
नागेश्वरी नागकन्या नागरी च नगात्मजा ॥८॥
नगाधिराजतनया नगराजप्रपूजिता ।
नवीना नीरदा पीता श्यामा सौन्दर्यकारिणी ॥९॥
रक्ता नीला घना शुभ्रा श्वेता सौभाग्यदायिनी ।
सुन्दरी सौभगा सौम्या स्वर्णाभा स्वर्गतिप्रदा ॥१०॥
रिपुत्रासकरी रेखा शत्रुसंहारकारिणी ।
भामिनी च तथा माया स्तम्भिनी मोहिनी शुभा ॥११॥
रागद्वेषकरी रात्री रौरवध्वंसकारिणी ।
यक्षिणी सिद्धनिवहा सिद्धेशा सिद्धिरूपिणी ॥१२॥
लङ्कापतिध्वंसकरी लङ्केशरिपुवन्दिता ।
लङ्कानाथकुलहरा महारावणहारिणी ॥१३॥
देवदानवसिद्धौघपूजिता परमेश्वरी ।
पराऽणुरूपा परमा परतन्त्रविनाशिनी ॥१४॥
वरदा वरदाऽऽराध्या वरदानपरायणा ।
वरदेशप्रिया वीरा वीरभूषणभूषिता ॥१५॥
वसुदा बहुदा वाणी ब्रह्मरूपा वरानना ।
बलदा पीतवसना पीतभूषणभूषिता ॥१६॥
पीतपुष्पप्रिया पीतहरा पीतस्वरूपिणी ।
इति ते कथितं विप्र नाम्नामष्टोत्तरं शतम् ॥१७॥
यः पठेत् पाठयेद् वाऽपि शृणुयाद् वा समाहितः ।
तस्य शत्रुः क्षयं सद्यो याति वै नात्र संशयः ॥१८॥

प्रभातकाले प्रयतो मनुष्यः पठेत् सुभक्त्या परिचिन्त्य पीताम् ।
द्रुतं भवेत् तस्य समस्तवृद्धिर्विनाशमायाति च तस्य शत्रुः ॥१९॥



## रुद्रयामलोक्त-बगलाष्टोत्तरशतनामस्तोत्रम्

ब्रह्मास्त्ररूपिणी देवी माता श्रीबगलामुखी ।
चिच्छक्तिर्ज्ञानरूपा च ब्रह्मानन्दप्रदायिनी ॥१॥
महाविद्या महालक्ष्मीः श्रीमत् त्रिपुरसुन्दरी ।
भुवनेशी जगन्माता पार्वती सर्वमङ्गला ॥२॥
ललिता भैरवी शान्ता अन्नपूर्णा कुलेश्वरी ।
वाराही छिन्नमस्ता च तारा काली सरस्वती ॥३॥
जगत्पूज्या महामाया कामेशी भगमालिनी ।
दक्षपुत्री शिवाङ्कस्था शिवरूपा शिवप्रिया ॥४॥
सर्वसम्पत्करी देवी सर्वलोकवशङ्करी ।
वेदविद्या महापूज्या भक्ताद्वेषी भयङ्करी ॥५॥
स्तम्भरूपा स्तम्भिनी च दुष्टस्तम्भनकारिणी ।
भक्तप्रिया महाभोगा श्रीविद्या ललिताम्बिका ॥६॥
मैनापुत्री शिवानन्दा मातङ्गी भुवनेश्वरी ।
नारसिंही नरेन्द्रा च नृपाराध्या नरोत्तमा ॥७॥
नागिनी नागपुत्री च नागराजसुता उमा ।
पीताम्बा पीतपुष्पा च पीतवस्त्रप्रिया शुभा ॥८॥
पीतगन्धप्रिया रामा पीतरत्नार्चिता शिवा ।
अर्द्धचन्द्रधरी देवी गदामुद्गरधारिणी ॥९॥
सावित्री त्रिपदा शुद्धा सद्योरागविवर्धिनी ।
विष्णुरूपा जगन्मोहा ब्रह्मरूपा हरिप्रिया ॥१०॥
रुद्ररूपा रुद्रशक्तिश्चिन्मयी भक्तवत्सला ।
लोकमाता शिवा सन्ध्या शिवपूजनतत्परा ॥११॥
धनाध्यक्षा धनेशी च धर्मदा धनदा धना ।
चण्डदर्पहरी देवी शुम्भासुरनिबर्हिणी ॥१२॥
राजराजेश्वरी देवी महिषासुरमर्दिनी ।
मधुकैटभहन्त्री च रक्तबीजविनाशिनी ॥१३॥
धूम्राक्षदैत्यहन्त्री च भण्डासुरविनाशिनी ।
रेणुपुत्री महामाया भ्रामरी भ्रमराम्बिका ॥१४॥
ज्वालामुखी भद्रकाली बगला शत्रुनाशिनी ।
इन्द्राणी इन्द्रपूज्या च गुहमाता गुणेश्वरी ॥१५॥

वज्रपाशधरा देवी जिह्वामुद्‌गरधारिणी ।
भक्तानन्दकरी देवी बगला परमेश्वरी ॥१६॥
अष्टोत्तरशतं नाम्नां बगलायास्तु यः पठेत् ।
रिपुबाधाविनिर्मुक्तः लक्ष्मीस्थैर्यमवाप्नुयात् ॥१७॥
भूतप्रेतपिशाचाश्च ग्रहपीडानिवारणम् ।
राजानो वशमायान्ति सर्वैश्वर्यं च विन्दति ॥१८॥
नानाविद्यां च लभते राज्यं प्राप्नोति निश्चितम् ।
भुक्तिमुक्तिमवाप्नोति साक्षात् शिवसमो भवेत् ॥१९॥

●

## बगलामुखीस्तोत्र

**विनियोग**—इस स्तोत्र का पाठ करने के पूर्व यथाविधान विनियोग पढ़कर जल छोड़े—

ॐ अस्य श्रीबगलामुखीस्तोत्रस्य भगवान्नारद ऋषिः, बगलामुखी देवता, मनसन्निहितानां दुष्टानां विरोधिनां वाङ्मुखपदजिह्वाबुद्धीनां स्तम्भनार्थे श्रीबगलामुखीप्रसाद-सिद्ध्यर्थे जपे विनियोगः ।

**करन्यास**—ॐ ह्लीं अङ्गुष्ठाभ्यां नमः । ॐ बगलामुखि तर्जनीभ्यां नमः । ॐ सर्वदुष्टानां मध्यमाभ्यां वषट् । ॐ वाचं मुखं पदं स्तम्भय अनामिकाभ्यां हुम् । ॐ जिह्वां कीलय कनिष्ठिकाभ्यां वौषट् । ॐ बुद्धिं विनाशय ह्लीं स्वाहा करतलकरपृष्ठाभ्यां फट् ।

**हृदयादिन्यास**—ॐ ह्लीं हृदयाय नमः । ॐ बगलामुखि शिरसे स्वाहा । ॐ सर्वदुष्टानां शिखायै वषट् । ॐ वाचं मुखं पदं स्तम्भय कवचाय हुं । ॐ जिह्वां कीलय नेत्रत्रयाय वौषट् । ॐ बुद्धिं विनाशय ह्लीं ॐ स्वाहा अस्त्राय फट् ।

**ध्यान**—

सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लासिनीं
हेमाभाङ्गरुचिं शशाङ्कमुकुटां स्रक्चम्पकस्रग्युताम् ।
हस्तैर्मुद्गरपाशबद्धरसनां सम्बिभ्रतीं भूषणै-
र्व्याप्ताङ्गीं बगलामुखीं त्रिजगतां संस्तम्भिनीं चिन्तये ॥१॥

अर्थात् स्वर्ण के सिंहासन पर आसीन, त्रिनेत्रा, पीताम्बरा, स्वर्ण कान्ति वाली, चन्द्रकिरीटधारिणी, चम्पा पुष्प की माला पहने हुए, हाथ में मुद्गर एवं पाश लिये हुए तथा शत्रु की जिह्वा खींचे हुए, प्रत्येक शरीराङ्ग को आभूषणों से अलंकृत करके लोकत्रय को स्तम्भित किये हुए भगवती बगलामुखी का मैं चिन्तन (ध्यान) करता हूँ ।

**मन्त्र**—ॐ ह्लीं बगलामुखि ! सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा ।

यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः।
यतः प्रसूता जगतः प्रसूती तोयेन जीवन् व्यससर्ज भूम्याम् ॥
यदोषधीभिः पुरुषान् पशूंश्च विवेश भूतानि चराचराणि।
अतः परं नान्यदणीयसं हि परात्परं यन्महतो महान्तम्।
यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ॥
तदेवर्तं तदु सत्यमाहुः तदेव ब्रह्म परमं कवीनाम्।
इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः ॥
तदेवाग्निस्तद्वायुः तत्सूर्यस्तदु चन्द्रमाः।
तदेव शुक्रममृतं तद् ब्रह्म तदापः स प्रजापतिः।
सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ॥
कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः।
अर्धमासा मासा ऋतवः संवत्सरश्च कल्पताम् ॥
स आपः प्रदुधे उभे इमे अन्तरिक्षमथो सुवः।
नैनमूर्ध्वं न तिर्यञ्च न मध्ये परिज्रभत्।
न तस्येशे कश्चन तस्य नाम महद् यशः।
न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।
हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥

अद्भ्यः सम्भूतो हिरण्यगर्भः इत्यष्टौ एष हि देवः प्रदिशोऽनुसर्वाः पूर्वो हि जातः स उ गर्भे अन्तः स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखस्तिष्ठति विश्वतोमुखः। विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात्। सम्बाहुभ्यां धमति सम्पत-त्रैर्द्यावाभूमी जनयन् देव एकः। तेनस्तत् पश्यन् विश्वाभुवनानि विद्वान् यत्र विश्वं भवत्येकनीडम्। यस्मिन्निदꣳ सञ्चविचैकं स ओतः विभुः प्रजासु। प्रतद्वोचे अमृतं न विद्वान् गन्धर्वो नाम निहितं गुहासु ॥

**ब्रह्मानन्दवल्ली : सप्तम कलश**

**प्रथम अनुवाक**

ॐ सहनाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः।

ब्रह्मविदाप्नोति परम्। तदेषाभ्युक्ता। सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति।

तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात्पुरुषः। स वा एष पुरुषोऽन्नरसमयः तस्येदमेव शिरः। अयं दक्षिणः पक्षः। अयमुत्तरः पक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।

### द्वितीय अनुवाक

अन्नाद्वै प्रजा: प्रजायन्ते। या: काश्च पृथिवीं श्रिता:। अथो अन्नेनैव जीवन्ति। अथैनदपि यन्त्यन्तत:। अन्नं हि भूतानां ज्येष्ठम्। तस्मात्सर्वौषधमुच्यते। सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते। अन्नं हि भूतानां ज्येष्ठम्। तस्मात्सर्वौषधमुच्यते। अन्नाद्भूतानि जायन्ते। जातान्यन्नेन वर्धन्ते। अद्यतेऽत्ति च भूतानि। तस्मादन्नं तदुच्यत इति।

तस्माद्वा एतास्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमय:। तेनैष पूर्ण:। स वा एष पुरुषविध एव। तस्य पुरुषविधतामन्वयं पुरुषविध:। तस्य प्राण एव शिर:। व्यानो दक्षिण: पक्ष:। अपान उत्तर: पक्ष:। आकाश आत्मा। पृथिवी पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।

### तृतीय अनुवाक

प्राणं देवा अनु प्राणन्ति। मनुष्या: पशवश्च ये। प्राणो हि भूतानामायु:। तस्मात्सर्वायुषमुच्यते। सर्वमेव त आयुर्मन्ति ये प्राणं ब्रह्मोपासते। प्राणो हि भूताना-मायु:। तस्मात्सर्वायुषमुच्यत इति। तस्यैष एव शारीर आत्मा य: पूर्वस्य।

### चतुर्थ अनुवाक

यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचनेति। तस्यैष एव शारीर आत्मा य: पूर्वस्य।

तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयस्तेनैष पूर्ण:। स वा एष पुरुषविध एव। तस्य पुरुषविधतामन्वयं पुरुषविध:। तस्य श्रद्धैव शिर:। ऋतं दक्षिण: पक्ष:। सत्यमुत्तर: पक्ष:। योग आत्मा। मह: पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।

### पञ्चम अनुवाक

विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपि च। विज्ञानं देवा: सर्वे। ब्रह्म ज्येष्ठमुपासते। विज्ञानं ब्रह्म चेद्वेद। तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा। सर्वान्कामान्समश्नुत इति। तस्यैष एव शारीर आत्मा य: पूर्वस्य।

तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय:। तेनैष पूर्ण:। स वा एष पुरुषविध एव। तस्य पुरुषविधतामन्वयं पुरुषविध:। तस्य प्रियमेव शिर:। मोदो दक्षिण: पक्ष:। प्रमोद उत्तर: पक्ष:। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।

### सप्तम अनुवाक

असद्वा इदमग्र आसीत्। ततो वै सदजायत्। तदात्मानं स्वयमकुरुत। तस्मात्तत्सुकृतमुच्यत इति।

यद्वै तत्सुकृतं रसो वै स:। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति। को ह्येवान्यात्मक: प्राण्याद् यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयति।

यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां वितन्यते। अथ सोऽभयं गतो भवति।

यदा ह्येवैष एतस्मिन्नु दरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषो मन्वानस्य। तदप्येष श्लोको भवति।

### अष्टम अनुवाक

भीषास्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चम इति।

सैषाऽऽनन्दस्य मीमांसा भवति। युवा स्यात्साधुयुवाध्यापक आशिष्टो द्रढिष्ठो बलिष्ठस्तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः।

ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य।

ये ते शतं मनुष्यगन्धर्वाणामानन्दाः। स एको देवगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतं देवगन्धर्वाणामानन्दाः। स एकः पितृणां चिरलोकलोकानामानन्दः। श्रोत्रियस्य चाकामहतस्य॥

ते ये शतमाजानजानां देवानामानन्दाः। स एकः कर्मदेवानां देवानामानन्दः। ये कर्मणा देवानपि यन्ति। श्रोत्रियस्य चाकामहतस्य।

ते ये शतं कर्मदेवानां देवानामानन्दाः। स एको देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतं देवानामानन्दाः। स एक इन्द्रस्यानन्दः श्रोत्रियस्य चाकामहतस्य।
ते ये शतमिन्द्रस्यानन्दाः। स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य।
ते ये शतं बृहस्पतेरानन्दाः। स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य।
ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य।

स यश्चायं पुरुषे यश्चासावादित्ये स एकः। स य एवंविदस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसंक्रामति। एतं प्राणमयमात्मानमुपसंक्रामति। एतं मनोमयमात्मानमुपसंक्रामति। एतं विज्ञानमयमात्मानमुपसंक्रामति। एतमानन्दमयमात्मानमुपसंक्रामति। तदप्येष श्लोको भवति।

### नवम अनुवाक

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति।

एतं ह वाव न तपति। किमहं साधु नाकरवम्। किमहं पापमकरवमिति। स विद्वानेते आत्मानं स्पृणुते। उभे ह्येवैष एते आत्मानं स्पृणुते। य एवं वेद। इत्युपनिषत्।

**ब्रह्मानन्दवल्ली समाप्त**

## भृगुवल्ली : अष्टम कलश

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै। ॐ शान्ति: शान्ति: शान्ति:।

### प्रथम अनुवाक

भृगर्वै वारुणि: वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। तस्मा एतत्प्रोवाच। अन्नं प्राणं चक्षु: श्रोत्रं मनो वाचमिति। तं होवाच। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद् ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।

### द्वितीय अनुवाक

अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत्। स तपस्तप्त्वा।

### तृतीय अनुवाक

प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।

### चतुर्थ अनुवाक

मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि जायन्ते। मनसा जातानि जीवन्ति। मन: प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत्। स तपस्तप्त्वा।

### पञ्चम अनुवाक

विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते। विज्ञानेन जातानि जीवन्ति। विज्ञानं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत्। स तपस्तप्त्वा।

### षष्ठ अनुवाक

आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति। सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता। स य एवं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या।

### सप्तम अनुवाक

अन्नं न निन्द्यात्। तद्व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणाः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या।

### अष्टम अनुवाक

अन्नं न परिचक्षीत। तद् व्रतम्। आपो वा अन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतींष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या।

### नवम अनुवाक

अन्नं बहु कुर्वीत। तद् व्रतम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या।

### दशम अनुवाक

न कञ्चन वसतौ प्रत्याचक्षीत। तद् व्रतम्। तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्। आराध्यस्मा अन्नमित्याचक्षते। एतद्वै मुखतोऽन्नं राद्धम्। मुखतोऽस्मा अन्नं राध्यते। एतद्वै मध्यतोऽन्नं राद्धम्। मध्यतोऽस्मा अन्नं राध्यते। एतद्वा अन्ततोऽन्नं राद्धम्। अन्ततोऽस्मा अन्नं राध्यते। य एवं वेद।

क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोः। गतिरिति पादयोः। विमुक्तिरिति पायौ। इति मानुषीः समाज्ञाः। अथ दैवीः। तृप्तिरिति वृष्टौ। बलमिति विद्युति। यश इति पशुषु। ज्योतिरिति नक्षत्रेषु। प्रजातिरमृतमानन्द इत्युपस्थे। सर्वमित्याकाशे।

तत्प्रतिष्ठेत्युपासीत। प्रतिष्ठावान् भवति। तन्मह इत्युपासीत। महान् भवति। तन्मन इत्युपासीत। मानवान् भवति। तदन्नम् ह्युपासीत। नम्यन्तेऽस्मै कामाः। तद् ब्रह्मेत्युपासीत। ब्रह्मवान् भवति। तद् ब्रह्मणः परिमर इत्युपासीत। पर्येणं म्रियन्ते द्विषन्तः सपत्नाः। परि येऽप्रिया भ्रातृव्याः।

स यश्चायं पुरुषे यश्चासावादित्ये स एकः। स य एवंवित्। अस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसंक्रम्य। एतं प्राणमयमात्मानमुपसंक्रम्य। एतं मनोमयमात्मानमुपसंक्रम्य। एतं विज्ञानमयमात्मानमुपसंक्रम्य। एतमानन्दमयमात्मानमुपसंक्रम्य। इमांल्लोकान्कामान्नी कामरूप्यनुसञ्चरन्। एतत् साम गायन्नास्ते।

हा३वु हा३वु हा३वु। अहमन्नमहमन्नमहमन्नम्। अहमन्नादो३ऽहमन्नादो३-ऽहमन्नादः। अहं श्लोककृदहं श्लोककृदहं श्लोककृत्। अहमस्मि प्रथमजा ऋता३स्य। पूर्वं देवेभ्योऽमृतस्य ना३भायि। यो मा ददाति स इदेव मा३वाः। अहमन्नमन्नमदन्तमा३-द्मि। अहं विश्वं भुवनमभ्यभवा३म्। सुवर्णज्योतीः। य एवं वेद। इत्युपनिषत्।

ॐ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवी-न्माम्। आवीद्वक्तारम्।

ॐ शान्तिः शान्तिः शान्तिः।

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै।

ॐ शान्तिः शान्तिः शान्तिः।

**इति भृगुवल्ली समाप्ता**

## नवम कलश का पूजन

इस कलश का पूजन मूल मन्त्र से करना चाहिए।

(अभिषेक के कलश की स्थापना के समय प्रत्येक कलश की स्थापना के विविध मन्त्र हैं। कलश-स्थापना की विधि में इन मन्त्रों की विशिष्ट भूमिका है।)

**कलश-स्थापन एवं मन्त्र**

| (प्रथम कलश) | (द्वितीय कलश) | (तृतीय कलश) | (चतुर्थ कलश) |
|---|---|---|---|
| इन्द्र, अग्नि, यम, निर्ऋति, वरुण, वायु, कुबेर, ईशान, ब्रह्मा, अनन्त का आवाहन। | श्रीसूक्त का पाठ, लक्ष्मीसूक्त का पाठ | पुरुषसूक्त का पाठ | नारायणानुवाक |

| (पञ्चम कलश) | (षष्ठ कलश) | (सप्तम कलश) | (अष्टम कलश) | (नवम कलश) |
|---|---|---|---|---|
| पञ्च ब्रह्ममन्त्र | अम्भस्यपारेणा-नुवाक | ब्रह्मानन्दवल्ली (तै.उप.) | भृगुवल्ली (तै.उप.) | मूल मन्त्र |



